शिवयोगपरिप्राप्त्या६ सत्वादिगुणवर्जिताः ।।५ । ।

तिष्ठामो निर्वृता व्यास सेवमानास्तमीश्वरम् ।

परमाणुरसावीशो भावगम्यो मनीषिणाम् । ।६।।

परमैश्वर्यसंयुक्तस्तत्रास्ते विग्रहेश्वरः ।

क्षमा सत्यं धृतिश्चैव तपो वैराग्यमेव च । ।७।।

- - - - - - - - -- - - -

६१ एषा - क. ख. । ६२ कृत्स्ना - क. ख. । ६३.. वर्जिता - क. ख. । ६४ निष्कला -क ख। ६५ परं यस्या न विद्यते - क. ख. । ६६ मुच्यन्ति - क. । ६७ परा - ख. । ६८ यान्तीति - क. । ६९ द्विसप्तत्युत्तर - क. । ७० अध्यायाङ्को न विद्यतेत्र ख पुस्तके ।

१ स्थितम् - ख. । २ विनिबन्धनात् - क. । ३ स्थाण्वीश्वरालयः (?) । ४ पिता मम - ख. । ५ बालिखिल्यपुरोगाश्च - क. ख. । ६ परिप्राप्ताः - ख. ।

- - - - - - - - -- - - -



स्रष्टृत्वं७ ज्ञानवैराग्यादात्मबोधो८ महेशता ।

नित्यमेतानि तिष्ठन्ति तस्मिन्देवे महेश्वरे । ।८। ।

योगवह्निरसावात्मा ब्रह्मसृक्परमेश्वरः ।

साकल्यान्मूर्त्तिमास्थाय९ करोति जगतः स्थितिम् । ।९। ।

अष्टमं ध्रुवमध्येय(? )मक्षरं१० मुक्तिकारणम् ।

मायाधाम तदीशस्य जगत्संहारहेतुमत् । ।8.183.१ ० ।।

ऊर्ध्वतो ब्रह्मलोकस्य योजनानां महात्मनः ।

विंशतीनान्तु कोटीनां पुरं स्थाणोः समास्थितम् । ।१ १।।

एतावानूर्ध्वसञ्चारो गत्यन्तश्च ततः स्मृतः ।

असंख्याताः पुरे तस्मिन्नित्याः सूक्ष्मास्तथाव्ययाः ।।१२।।

ज्ञानाधिकारधर्मिण्यः शैवीप्रकृतयः स्थिताः ।

याभ्यो जज्ञे११ महेशानौ ब्रह्मविष्णू प्रजापती ।।१३।।

ताभ्यां प्रकृतिभूताभ्यां स्रष्टृत्वं परमं ददौ ।

अक्षयो विमलः सूक्ष्मो निष्कलः सकलोपि च ।।१४।।

स्थिरे मूर्ते१२ परे दिव्ये परमाणुपदे स्थितः ।

मनसः प्राक्तमस्यादौ१३ तत्तेजःसंप्रकाशनम् ।। १५।।

यदासीद्धैममण्डन्तु१४ लौकिकं त्वापवर्गिकम् ।

महत्तत्१५ सर्वतो नित्यमीश्वरात्तदभूत्तदा ।।१६।।

तस्माद्बीजस्य निर्भेदः क्षेत्रज्ञः स विभुः स्मृतः ।

प्रकृतिर्वैष्णवी प्रोक्ता सा च तस्माद्विनिर्गता ।।१७ ।।

सुरासुरादिसृष्ट्यर्थं ब्रह्मत्वं१६ पुनरास्थिता ।

अण्डस्य भेदतः१७ पद्मब्रह्मणः१८ शंकरात्मनः ।

ब्रह्मलोकपुरस्ताच्च पुरं तेजोमयं महत् ।।१८।।

यत् स्थानं विग्रहेशस्य ईश्वरस्य परात्मनः ।

नाम्ना शिवपुरं व्यास गतिरीश्वरयोगिनाम् ।। १९।।

- - - - - - - - -- - - -

७ सृष्टितं क., संस्कृतं ख। ८ . . .त्म बोधौ ख.। ९ साकल्यान्मुक्तिमास्थाय - क. । १० दक्षरं(?) । ११ अन्तर्भावितण्यर्थोत्र जज्ञे शब्दः, जनयामासेत्यर्थः । १२ पूते - ख. । १३ प्राप्तत - क., प्राप्तमस्यादौ - ख., प्राक्तनस्यादौ (?) । १४ द्धैममण्डस्तु - क. । १५ महान्तं - क. ख., महान्तत् (?) । १६ ब्रह्मत्वे - क. । १७ भिद्यतः (?) । १८ पद्मं ब्रह्मणः (?) ।

- - - - - - - - -- - - -

शतं शतसहस्राणां योजनानां तदुच्यते ।

महीमण्डलसंस्थानं तन्मध्ये विस्तृतं१९ स्मृतम् ।।8.183.२ ० ।।

स्फुरदादित्यरूपेण वह्नेरधिकतेजसा ।

महता हैमजातेन२० प्राकारेण सुवेष्टितम् । ।२१ । ।

चतुर्भिर्हैमजैर्द्वारैर्मणिमुक्ताविभूषितैः२१ ।

शोभितं तत्पुरं२२ रम्यं शुशुभे सिद्धसेवितम् ।। २२। ।

जरामृत्युश्रमव्याधिकोपमोहमदादयः२३ ।

न क्रमन्त्यशुभास्तस्मिन् भावाः शिवपुरे मुने । ।२३ ।।

शतं शतसहस्राणां योजनानां यथादिशम् ।

तत् पुरं वृषभाङ्कस्य सर्वव्यापि समृद्धिमत् । । २४।।

दिव्या मारकती२४ भूमिः स्पर्शमात्रसुखावहा२५ ।

वैदूर्यमणिकल्पानि२६ बालार्कसदृशानि च ।।२५। ।

क्वचिद्रक्तानि पद्मानि क्वचिच्छ्वेतानि रेजिरे ।

महाह्रदप्रमाणानि नालैर्वैदूर्यसन्निभैः ।। २६।।

गन्धवन्ति महार्हाणि विन्यस्तानि महीतले ।

इन्द्रनीलनिकाशानि महामणिनिभानि च ।।२७।।

कचित् कृष्णार्धरक्तानि दिव्यगन्धवहानि च ।

- - - - - - तत्र उत्पलानि समन्ततः ।।२८।।

प्रवहन्ति महानद्यो यास्तस्मिन्ननमृतोदकम् ।

पुरे भगवतः शम्भोः पाराशर्य निबोध ताः२७ ।।२९। ।

वरदा च वरेण्या च वरेशा वरवर्णिनी ।

वाराही२८ वारिभद्रा च वरा चैव महापगाः ।। 8.183.३० ।।

नानाकुसुमसंमिश्रं ता वहन्ति जलामृतम् ।

न देवा न मुनीन्द्राश्च नासुराः पितरो न च । ।३ १ ।।

- - - - - - - - -- - - -

१९ विस्त्रितं - क. । २० जातहेमेन - क., जातरूपेण (?) । । २१ मुक्तामणिविभूषितैः (?) । २२ तत्परं (?) । २३ महादयः - क. । २४ मरकती - क. । २५ स्पर्शमात्रत् सुखावहा (?) । २६ तुल्यानि(?) । २७ निबोधत - क. । २८ वराही - क. ।

- - - - - - - - -- - - -



न चैवान्ये समर्थाः२९ स्युर्ज्ञातुं तत्पुरमद्भुतम् ।

अन्तर्मनसि बुद्धा३० ये सर्वतो भक्तिभाविताः ।

शिवैकमनसो व्यास तस्मिन्मोदन्ति ते नराः३१ ।।३२। ।

तस्य मध्ये पुरेन्द्रस्य सूर्यज्वलनवर्चसः ।

मेरुशृङ्गप्रतीकाशो दिग्भद्रस्तपनप्रभः ।।३ ३ । ।

प्रासादो लक्षपादस्तु कामगः कनकामयः ।

अनिरीक्ष्यैर्महारत्नैः३२ समन्तात् परिशोभितम् ।। ३४।।

वैदूर्यैर्व्योमसंकाशैः स्फाटिकैश्चन्द्रसप्रभैः३३ ।

प्रवालैरर्कसंकाशैरिन्द्रनीलमयैः परैः३४ । । ३५ ।।

शशिरश्मिप्रकाशाभिः क्वचिदर्कांशुरूपिभिः ।

शोभितं तत्पताकाभिर्विरराज सुखानिलम् । ।३ ६। ।
सर्वर्तुकुसुमैश्चित्रैरिच्छारत्नफलैरपि ।

शुशुभे तत्पुरं कीर्णं पादपैर्गिरिसन्निभैः । ।३७। ।

महीध्राणां यथा मेरुस्सर्वेषां प्रवरो महान् ।

तथैव तत्पुरं रेजे सर्वलोकोपरि स्थितम् । ।३८। ।

तत्र विश्वेश्वरः साक्षान्महाभूतपतिर्हरः ।

सदास्ते सहितः पत्न्या षड्विंशः परमेश्वरः ।। ३९।।

लक्ष्मीर्मेधा धृतिश्चैव ह्रीः श्रीः किर्तिः सरस्वती ।

उमया सहितास्तत्र मोदन्ते लोकमातरः । ।8.183.४० ।।

शिवभावर्पितात्मानो ये नरा रुद्रतत्पराः ।

यत्र तत्र मृता वत्स तेषां तत्रास्पदं स्मृतम३५ ।।४१ । ।

ये च माहेश्वरा व्यास तिष्ठन्ते शङ्करालये ।

मुनयः शङ्करं भक्तास्तान् शृणुष्व समाहितः ।।४२।।

अहं सनन्दनश्चैव सनकः ससनातनः ।

ऋभुर्ब्रह्मा सुरज्येष्ठो नरनारायणावपि । ।४३ । ।

- - - - - - - - -- - - -

२९ महेशस्य - क. । ३० शुद्धा (?) । ३१ नेतरा (रे)? । ३२ अनिरीक्षैर्महारत्नैः - क, । ३३ श्चेन्दुसप्रभैः क. ख. । ३४ पुरैः - क. । ३५ इत परं खण्डितं क पुस्तके ।

- - - - - - - - -- - - -



- - - - - - शिष्यः सिद्धः पञ्चशिखस्तथा ।

मुनिर्हयशिरा यश्च यज्ञवल्कादयस्तथा३६ ।।४४।।

त्र्यक्षाः शङ्करवर्ष्माणः परमैश्वर्यसंयुताः ।

तिष्ठन्तीश्वरमूलस्था गुणातीता मुमुक्षवः । ।४५। ।

उत्पन्ने जगतो नाशे महाप्रलयसंज्ञके ।

ईश्वरं ते समाविश्य प्राप्नुवन्त्यपवर्गिकम् ।।४६ ।।

यैश्च दृष्टानि विप्रेन्द्र शिवलिङ्गानि तानि तु३७ ।

केदारो मध्यमश्चैव गिरीशश्च३८ महालये । ।४७। ।

चतुःशृङ्गेश्वरो देवः श्रीगिरौ च महेश्वरः ।

कारोहणो च देवेशो गङ्गाद्वारे च शङ्करः ।

भद्रेशश्च महादेवः शंकुकर्णेश्वरस्तथा । ।४८।।

महाकालेश्वरश्चैव गोकर्णे च तथा ह्युभौ ।

अविमुक्तेश्वरश्चैव यानि चान्यानि भूतले ।।४९।।

तेपि यान्ति मृता व्यास तत्पुरं३९ गिरिजापतेः ।

योगः४० पाशुपतो यश्च मया ते परिकीर्त्तितः । । 8.183.५० ।।

व्रतं पाशुपतं प्राप्य सोपि तत्र४१ प्रवर्तते ।

भक्तिर्येषां भवे नित्यं कृतार्थास्ते नरोत्तमाः । ।५१ । ।

मृताः शिवपुरे व्यास त्र्यक्षाः पट्टिशपाणयः४२ ।

नन्दीशस्कन्दसंकाशा४३ योगैश्वर्यबलान्विताः ।।५२।।

रुद्रा भवन्ति४४ ते व्यास सदा शंकरपार्श्वगाः ।

एष ते कथितः सर्वो योगो माहेश्वरः परः । ।५३ । ।

सकलं निष्कलं चैव ज्ञात्वैवं परमीश्वरम् ।

सर्वबन्धविनिर्मुक्तः परं४५ मोक्षमवाप्स्यसि । ।५४।।

- - - - - - - - -- - - -

३६ यज्ञावाल्कादयस्तथा - ख. । ३७ निभानि तु(?) । ३८ गिरीशस्य - ख । ३९ तत्पर - ख । ४० योगं - ख. । ४१ तेषु - ख. । ४२ पट्टशपाणयः - ख' । ४३ नन्दीशाः स्कन्दसंकाशा - ख. । ४४ च्यवन्ति - ख, ।

- - - - - - - - -- - - -

भविष्यसि च योगात्मा४६ ज्ञानस्यास्य प्रभावतः ।

जगात्स्थितिकरो योगी स्मार्तधर्मप्रवर्तकः ।।५५। ।

ज्ञानशक्त्या स्मृ - - - ब्रह्माण्डोद्भकारणे४७ ।

स्थितिधर्मनिबोधार्थं पुराणानि४८ करिष्यसि ।।५६।।

यज्ञधर्मप्रचारार्थ वेदं स्वायम्भुवस्मृतम् ।

विज्ञानात् त्वमनुस्मृत्य चतुर्धा विकरिष्यसि । ।५७।।

मन्वन्तरमिदं४९ कृत्स्नं वैवस्वतमनिन्दितम् ।

लोकस्थितिकरा५० धर्मा वेदस्मृतिपुरोगमाः ।।५८। ।

त्वत्कृताः प्रचरिष्यन्ति तीर्थकृत् त्वं भविष्यसि ।

भस्मव्रतं च संप्राप्य पशुपाशविमोचनम् । ।५९।।

शांकरज्ञानसंपन्न५१ ईश्वरे लयमाप्स्यसि५२ ।

एवमुक्तः स विप्रेन्द्रो हृष्टसर्वतनूरुहः ।।8.183.६ ० । ।

उपसद्य मुनीन्द्रं तं भस्मसंस्कारमाप्तवान् ।

तत्क्षणाच्चास्य योगोसौ प्रादुर्भूतो महामुनेः । ।६१ । ।

अभिवाद्य गुरुं व्यासो ब्रह्मसूनुं महौजसम् ।

शर्वायतनवीक्षार्थं विचचार महीतले । ।६२ । ।

वायुरुवाच ५३

एवं सनत्कुमारस्तु पृष्टो व्यासेन धीमता ।

मुनीन्द्रः कथयामास पुराणं स्कन्दसंभवम् ।। ६३ । ।

सर्वागमसमायुक्तं मन्वन्तरजगत्स्थितिम् ।

शिवयोगोद्भवं ध्यानं सर्वज्ञानार्णवं महत् ।।६४। ।

तस्माद्यूयमपि ज्ञात्वा५४ व्रतं पाशुपतं द्विजाः ।

अभ्यस्य शांकरं५५ योगमीश्वरे लयमाप्नुत ।।६५ । ।

- - - - - - - - -- - - -

४६ योगात् मां - ख. । ४७ ब्रह्माण्डे भवकारणे - ख. । ४८ पुराणा (ण) ञ्च - ख । ४९ ..मिमं - ख. । ५० लोकस्थितिकरं - ख. । ५१ शङ्करज्ञासंपन्न - ख. । ५२ लयमेष्यसि (?) । ५३ सूत उवाच (?) । ५४ प्राप्य - ख. । ५५ शङ्करं - ख ।

- - - - - - - - -- - - -



इममागममन्विष्य व्यासोसौ मुनिपुङ्गवः ।

वेदार्थस्मृतिसंबद्धा५६ विद्याश्चक्रे महामुनिः । ।६६ ।।

अतो विनिर्गता धर्मा योगविद्यास्तथैव च ।

पुराणं प्रथमं प्राहुराद्यं नन्दीश्वरो५७ द्विजाः (?) ।।६७। ।

- - - - - - ख्यातो य इमं वेत्ति तत्त्वतः ।

त्रिवर्गः प्राप्यते तेन मुक्तिरेतेन जायते । । ६८ । ।

आयुः प्रवर्द्धतेनेन सर्वमेतेन लभ्यते ।

कृत्स्नस्य जगतो विप्रा आदिकर्ता यथा हरः । ।६९।।

तथा सर्वपुराणानां पुराणोयं परः स्मृतः५८ ।

अधीतो यैरयं५९ विप्रैस्तत्प - - - - - - । ।8.183.७० । ।

।

- - - - - - ( ष्य )सायुज्यं शृणुयाद्विभोः । ।७१ ।।

सेवनाद्योगसंसिद्धिं मोक्षं च परमं लभेत् ।

आद्यं पुण्यमुमापते६०र्द्विजवृषाः स्तोत्रानुवादं परं

देव्याश्चापि महाप्रभावकथनं सर्वागमैरंन्वितम् ।

स्कन्दस्योद्भवविक्रमै६१ - - - - - - - -

- - - - - - - - - - - - - प्नुयुः । ।७२। ।

नागेन्द्रैरसुरेन्द्रयक्षविबुधैः सिद्धैर्द्विजेन्द्रैरपि

शम्भावर्पितसर्वभावहृदयैर्यैयैरयं६२ सेवितः६३ ।

सर्वे ते ज्वलदर्कवह्निवपुषस्त्र्यक्षाः शशाङ्कत्विषः

देवास्यानुचरा बभुर्गणवरा - - - - - - - ।।७३ ।।

- - - - - - - - -- - - -

५६ वेदार्थस्मृतिसम्बन्धा - ख. । ५७ नन्दीश्वरं (?) । ५८ पुराणमिदमुत्तमम् (?) । ५९ ... रियं - ख, . .रिदं (?) । ६० पुराणः.. - ख. । ६१... विक्रमे - ख । ६२.. रिदं (?) । ६३ सेवितं (?) ।

- - - - - - - - -- - - -

विषयाणामनुक्रमणिका

१ प्रथमेध्याये-

प्रयागे ऋषीणां सूतेन समागमः, ऋषीणां स्कन्दजन्मविषयकः प्रश्नः । सूतस्य ब्याससनत्कुमारसंवादमुखेन स्कन्दोत्पत्तिकथावतरणोपक्रमः ।

२ द्वितीयेध्याये-

सनत्कुमारेण व्यासाय स्कन्दोत्पत्तिविषयकपुरातनकथाख्यानप्रतिज्ञानम् । प्रकृतपुराणगतविषयोद्देशसंक्षेपश्च ।

३ तृतीयेध्याये-

शम्भुतो ब्रह्मण उत्पत्तिः, तपश्चर्या, शर्वदर्शनम्, वरलाभः, प्राजापत्ये ऽभिषेकश्च ।

४ चतुर्थेध्याये-

प्रजासृष्ट्यर्थं ब्रह्मणः पुनस्तपश्चरणम् । रुद्राद्वरप्राप्तिः, पुत्रकामनयाग्नौ हविर्जुह्वतो ब्रह्मणो ललाटजस्वेदसंस- र्गादग्नितो नीललोहितरुद्रस्योत्पत्तिः, दक्षधर्मादीनामुत्पत्तिः, क्रमेण सकलप्रजासृष्टिः, कालान्तरे तस्य (ब्रह्मणः) विसर्जनम्, प्रयागे यजतो मरीच्यादिषट्कुलीयानामृषीणामागमः, समागतानां तेषां सर्वजगन्नियन्तृपरमकारण- जिज्ञासया प्रश्नः, ब्रह्मणा रुद्रस्यैव सर्वजगन्नियन्तृपरमकारणत्वकथनम्, तद्दर्शनार्थं च महासत्रानुष्ठानोपदेशः, ब्रह्मणा चक्रस्य विर्जनम्, नैमिशोत्पत्तिः ।

५ पंचमेध्याये-

नैमिशे ऋषीणां दीर्घसत्रारम्भः । तत्र वायोरागमनम्, जगत्सृष्ट्यादिविषये प्रश्नः, वायुना तत्सर्वस्याशेषतया कथनम् । सत्रसमाप्तौ वेदीमध्यात् सरस्वत्याः प्रादुर्भावः । नदीरूपेण प्रवृत्तायां तस्यामृषीणामवभृथस्नानम्, ब्रह्मलोकविभूषणायाः सरस्वत्या इत्थं ततोवतीर्य भूर्लोके प्रवृत्तौ किं कारणमिति ऋषीणां प्रश्नः, ब्रह्मयज्ञ- विवादरूपपुरातनेतिहासविवरणमुखेन वायुकृततत्कथावतारः, स्वकृतलोकसृष्टिदर्शनाद् ब्रह्मणः सर्वश्रेष्ठ- त्वाभिमानः, ब्रह्मयज्ञयोर्विवादः, रुद्रस्य तत्र प्रार्दुभावः, क्रुद्धस्य ब्रह्मणः पंचमशीर्षोत्पत्तिः, रुद्रकृतं तत्कृन्तनम्, ब्रह्मकृता रुद्रस्तुतिः, कृतस्य शिरसो धारणार्थं प्रार्थना च ।

६ षष्ठेध्याये-

ब्रह्मणोऽनुरोधात् तच्छिरःकपालमादाय विकृतरूपं दधतो रुद्रस्य देववेश्मसु भिक्षार्थं प्रचारः, विष्णोः सकाशाद् भिक्षामाददानेन रुद्रेण कपालवर्तिनि भैक्षरसे विष्णोश्छायादर्शनात्तत्सदृशमूर्तेर्नरस्य सर्जनम् ।

७ सप्तमेध्याये-

धृतकपालमृय भैरवरूपिणो रुद्रस्य भैक्षार्थं ततो ब्रह्मलोकगमनम्, तत्रोमिति व्याहरतस्तस्य वदनात् सरस्वत्याः प्रादुर्भावः, कपालसंस्थापनम्, महिषरूपिणो हालाहलाह्वयस्यासुरस्य विनाशः, कपालमातृणामुत्पत्तिः, महाकपालसरसस्तोत्रस्य चोत्पत्तिः ।

८ अष्टमाध्याये-

सरस्वतीप्रवृत्तिकथोसंहारः । सत्रसमाप्तौ ब्रह्मणस्तत्रागमः, ब्रह्मण उपदेशाद् ऋषिभिः शंकराराधनोद्देशेन पुनर्बहुविधसत्रानुष्ठानसमारभणम् । सत्रे स्वर्भानुना सोमस्यापहरणम्, गायत्र्या श्येनीभूय तत्प्रत्यानयनम्, सत्र- समाप्तिः । ब्रह्मादिदेवानामृषिभिः सह मैनाके तपश्चर्या, तपसोऽन्ते तुष्टेन शंकरेण तेभ्यो दर्शनदानम् ।

९ नवमेध्याये

ब्रह्मादिकृता रुद्रस्तुतिः, तेषु रुद्रस्यानुग्रहः । रुद्रेण स्वतेजसो विसर्जनम् । तेजसोर्धांशेन मुखत उल्कासर्जनम् । रुद्रादेशान्नारीभूतायास्तस्या ब्रह्मण अराधनाय तपश्चरणम् । स्वर्णाक्ष-स्वर्णाक्षीनामसमाख्या । षट्कुलीयानां तत्रैव क्षेत्रे निवसनार्थमादेशः, क्षेत्रमहिमा ।

१० दशमेध्याये-

रुद्राज्ञया तपश्चरन्त्यास्तस्या देव्या ब्रह्मण उपदेशात् त्र्यम्बकपतिप्राप्तये दक्षदुहितृत्वेन सतीनाम्ना शरीरान्तर- (जन्म) ग्रहणम्, सत्यास्त्र्यम्बकभार्यात्वम्, रुद्राणां सृष्टिः, स्थाणुपदनिरुक्तिः, दक्षकृतः सत्या अवमानः, सत्या योगधारणया देहत्यागः, महादेवकृतो दक्षशापः ।

११ एकादशाध्याये-

कदाचिद् हिमवतो गृहे कश्पस्यागमः । लोके ख्यातिकरं पूज्यत्वापादकं च किं, केन चाक्षया लोकाः स्युरिति कश्यप प्रति हिमवतः प्रश्नः, अपत्येन सर्वमाप्यत इति कश्यपकृतमपत्यमहिमवर्णनम्, दृष्टान्तमुखेन च सुकेशोपाख्यानकथनम् । सुकेशस्य रुद्राराधनया गणपत्वप्राप्तिस्तत्पितृणां गर्तादुद्धरणं चेति । कश्यपस्य हिमवन्तं प्रति गुणवदपत्योत्पादनोपदेशः, हिमवतस्तपश्चरणम् । ब्रह्मणो वरप्राप्तिः । मेनायां कन्यात्रयोत्पादनम् त्रिकुमारीणां दुश्चरतपश्चरणम्, अपर्णादि नाम-निर्वचनम् प्रसङ्गात् तासां पतिपुत्रादिसमुल्लेखः । उमाया महादेव-पतिप्राप्तये तपश्चरणम्, ब्रह्मणा समाश्वासनं वरदानं च ।

१२ द्वादशेध्याये-

ब्रह्मणः समाश्वासनेन देव्यास्तपसो निवृत्तिः । स्वाश्रमाद्वारि जातमशोकं समाश्रित्य संस्थितायां देव्याः समक्षं शशाङ्कतिलकस्य शिवस्य विकृतब्राह्मणरूपेणोपस्थितिर्विवाहार्थं प्रार्थना च । देव्याः स्वस्यास्वतन्त्रत्वज्ञापनम् ।

तदर्थं पिन्तुरन्तिकं गन्तुमनुरोधः । शिवस्य तेनैव रूपेण हिमालयसमीपे गमनं कन्यायाचनं च । हिमालयेन , तत्र सा स्वेच्छया यं तस्या भर्त्ता भवे'दितिस्वाभिप्रायप्रक--- - ततः प्रत्यागत्य नैराश्यं प्रकटयतः शिवस्य स्कन्धे ऽशोकस्तबकसंस्थापनेन तदैव देव्या तस्य स्वतो वरणम्, ततोऽन्तर्हितस्य शिवस्य पुनर्देव्या अग्रतो ग्राहग्रस्तदीनब्राह्मणबटुरूपेण नर्मलीलाप्रदर्शनम् ।

१३ त्रयोदशेध्याये -

हिमवत्पृष्ठे देव्याः स्वयंवरमहोत्सवः । सलोकपालानां सगणानां त्रिदिवौकसां गन्धर्वयक्षोरगकिन्नरादीनां च समक्षं देव्या महादेवपतिवरणम् । उद्वाहार्थं तत्र मण्डपनिर्माणम् । ऋतूनां विचित्र समागमः । सर्वभूतसमाजो- पस्थितिः ब्रह्मण आर्त्विज्ये पार्वतीपरमेश्वरयोर्वैवाहिकविधिसमापत्तिः ।

१४ चतुर्दशेध्याये -

उद्वाहानन्तरं हर्षातिशयेन ब्रह्मादिभिः कृताः देवदेवस्तुतिः । तुष्टस्य शम्भोर्देवान्प्रति वरदित्सा । वरस्य समुचितकालावधि तथैव न्यासार्थं देवानामनुरोधः । शिवेन तस्यानुमोदनम् ।

१५ पंचदशेध्याये -

मन्मथस्य दुरभिप्रायः । देवदेवकृतो मन्मथदेहदाहः । देवदेव्यो रतिसमाश्वासनम् । वसिष्ठस्य तपश्चर्या । देवदेवदर्शनम्, वसिष्ठकृता देवदेवस्तुतिः । देवदेवस्य तस्मिन्ननुग्रहः, वरदानम् ।

१६ षोडशेध्याये -

वसिष्ठात् शक्तेरुत्पत्तिः । अपत्यार्थं शक्तेस्तपश्चर्या । अभीष्टवरलाभः, शक्तेः पत्न्या अदृश्यन्त्या गर्भधारणम् । गर्भवत्यां लस्यां कल्माषपादेन राज्ञा गुरुशापाद्रक्षोभावमापन्नेन शक्तेर्भक्षणम् ।

१७ सप्तदशेध्याये -

राज्ञा कल्माषपादेन शक्तेर्भक्षणे किं कारणं किमर्थं च राजा रक्षसाविष्ट इति व्यासकृतजिज्ञासाशमनार्थ पुन- र्विस्तरेण सौदासोपाख्यानारम्भः । तत्र

विश्वामित्रप्रेरितेन रक्षसा हृतचेतनेन राज्ञा मांसभोजनार्थिने गुरुपुत्राय शक्तये मनुष्यमांसपरिवेषणम् । तद्विज्ञाय क्रुद्धेन मुनिना राज्ञे पुरुषादो ( राक्षसो) भविष्यसीति शापदानम् । मोहितेन च राज्ञा 'त्वामेव प्रथमं सभ्रातृकं भक्षयिष्यामी'ति प्रतिज्ञानम् ।

१८ अष्टादशेध्याये - सभार्यस्य सौदासस्य वनप्रवेशः । तत्र रक्षोभावमापन्नेन तेन वसिष्ठस्य पश्यतः सभ्रातृशतस्य शक्तेर्भक्षणम् । पुत्रशोकानुनप्तस्य वसिष्ठप्यात्महत्यार्थं प्रयत्नः । (शतद्रु) विपाशादि - नाम - निरुक्तिः । वसिष्ठेन राज्ञो रक्षोभावात् मोचनम् । राज्ञःक्षेत्रे पुत्रोत्पादनम् । अदृश्यन्त्या गर्भतः पराशरस्योत्पत्तिः । पराशरकृतो रक्षः- सत्रसमारम्भः ।

१९ ऊनविंशेध्याये - वसिप्ठानुरोधात् पराशरस्यापत्यार्थं मैनाके तपश्चरणम् । पराशरात् काल्यां व्यासस्योत्पत्तिः । व्यासात् शुकोत्पत्तिः, शुकस्य पुत्रचतुष्टय कन्या चैकेत्यन्वयोद्देशः, । पुत्रशतघातानन्तरमप्यप्रशान्तवैरेण विश्वामित्रेण वसिष्ठजिघृक्षया सरस्वत्याः साहाय्याभ्यर्थना । सरस्वत्याः स्रोतोवेगेन वसिष्ठस्याश्रमादपवाहनम् । विश्वामित्र- शापात् सरस्वत्या असृक्तोयत्वम् । विश्वामित्रस्य वसिष्ठजिघांसा । द्वयोरन्योऽन्यमुग्रसंमर्दः । सर्षीणां देवानामभ्यर्थनया द्वयोः प्रवर्धमानवैरत्यागेन परस्परं सख्याङ्गीकारः । सरस्वत्याः स्वच्छजलत्वम् ।

२० विंशेध्याये -

नन्द्युपाख्यानारम्भः, शिलादस्य पुत्रार्थं तपश्चर्या । शिलादकृता देवदेवस्तुतिः, वरलाभः, नन्दिन उत्पत्तिः । महादेवदर्शनेन तदनुग्रहलिप्सया नन्दिनो गृहान्निर्गमनम् ।

२१ एकविंशेध्याये -

भुवनां प्रविश्य तदन्तर्जले नन्दिनोऽनेककोटिरूद्रजापः । देवदेवदर्शनम् । नन्दिकृता देवदेवस्तुतिः ।

२२ द्वाविंशेध्याये -

नन्दिनं प्रति देवदेवस्यानुग्रहः । जप्येश्वरोत्पत्तिः । पञ्चनदसमाख्यानम् ।

२३ त्रयोविंशेध्याये -

नन्दिनः सेनापत्याभिषेकोपक्रमः। तदर्थं गणानामाह्वानम् । अखिलगणपसमाजोपस्थितिः । तेषामशेषतो नामारूप- संख्यादिविवरणम् ।

२४ चतुर्विंशेध्याये -

देवदेवाज्ञया गणपानां सर्वसंभारोपस्थापनम् । सर्वदेवानां सर्षीणां तत्रागमः । देवदेव्योः समक्षं पर्यायेण ब्रह्मादिकृतो महर्द्धियुक्तो नन्दिनः सेनापत्येभिषेकः । ब्रह्मादिकृता नन्दिस्तुतिः । सर्वतो जयकारश्च ।

२५ पंचविंशेध्याये -

नन्दिन कृते महादेवेन तत्र मरुतां सकाशे कन्यायाचनम् । मरुत्कन्यया सुयशया सह नन्दिनो विवाहः । निखिलैर्गणैर्नन्दिनोऽभिनन्दनम । नन्दिकृता गणानां स्तुतिः ।

२६ षड्विंशेध्याये -

एकदा स्वेच्छया पार्वत्या मातृगृहगमनम् । तत्र मातुर्मुखाद् भर्तृविषयकासंभावितासंमतहीनवचनश्रवणम् । ततो नातिहृष्टमनसा निवृत्य भर्तुः

पार्श्वे समागतया तया पर्वतं विहाय निवासार्थं स्थलान्तरगमनेच्छाप्रकटनम् । तदर्थं शिवेन निकुम्भनामानं गणेश्वरमाहूय तस्य दिवोदासाध्युषिताया वाराणास्याः शून्यीकरणार्थमाज्ञादानम् । तदनुसारं निकुम्भस्य वाराणासीं गत्वा नापितसाहाय्येन मन्दिरं निर्माय तत्र निजप्रतिमायाः प्रतिष्ठापनम् । ततश्च तत्र वरदगणेशरूपेण निकुम्भस्यावस्थानम् । स्वावहेलनं व्याजीकृत्य तेन समहिषीकस्य दिवोदासस्य ततः उत्सादनम् । एवं शून्यीकृतायां वाराणस्यामागत्य सोमस्य सगणस्य देवदेवस्य निवसनम् ।

२७ सप्तविंशाध्याये -

पार्वत्या पृष्टेन शम्भुना भक्तानुग्रहार्थं स्वप्रासादनिर्माण संमार्जनोपलेपन शुभ्रीकरण लिङ्गस्थापनपूजनस्नपना- भिगमनानुयानविविधद्रव्यदानोपचारसमर्पणादिफलकथनम् ।

२८ अष्टाविंशेध्याये -

शम्भूद्देश्यकतत्तुष्टिकरविविधव्रतोपवासतपोनियमदानजपनामकीर्तनादिफलकथनम् ।

२९ ऊनत्रिंशेध्याये -

सोमस्य देवदेवस्य वाराणसीक्षेत्रे स्वकृतदिव्योद्यानदर्शनम् । शम्भुकृतं गोप्रेक्षेश्वरकपिलाह्रदभद्रदोहोपशान्तशिव- हिरण्यगर्भेश्वर स्वलीनेश्वरव्याघ्रेश्वर ज्येष्ठस्थानाविमुक्तशैलेश्वरसंगमेश्वरमध्यमेश्वरशुक्रेश्वरजम्बुकेश्वराविमुक्तेश्वर- वाराणसीजाह्नव्यादीनां पुण्यक्षेत्राणां नामनिर्वचनपूर्वक माहात्म्यकथनम् । तदैव पार्वत्या पाशुपतव्रतिनां योगिनां ज्योतिर्मये षड्विंशे परस्मिन् पुरुषे लयदर्शनम् । एवं स्वपुण्यस्थानान्याख्याय शम्भुना पुनरविमुक्तक्षेत्रस्य (काश्या) भागीरथ्याश्च विस्तरेण माहात्म्यकथनम् ।

३० त्रिंशेध्याये -

जैगीषव्यतपश्चर्या, जैगीषव्यं प्रति शिवस्यानुग्रहः । जैगीषव्यकृता शिवस्तुतिः, वरलाभः । कुबेरतपश्चर्या, तत्सन्निधौ शिवयोरागमनम्, कुबेरेण कटाक्षदृष्ट्या ऽनिमिषेण पार्वतीमुखनिरीक्षणम् । पार्वत्याः कोपः । कुबेरस्य पिङ्गाक्षत्वम्, कुबेरकृता देवदेवस्तुतिः । कुबेरं प्रति शिवस्यानुग्रहः । पंचचूडानां तपश्चर्या, शिवयोस्तासां दर्शनदा- नम् । पंचचूडाभिः कृता पार्वतीस्तुतिः । ताभ्यः पार्वत्या वरप्रदानम् ।

३१ एकत्रिंशेध्याये -

हरिकेशापरनाम्नः पिङ्गलयक्षस्य शिवपरायणस्य गणत्वप्राप्तिः । पार्वत्याः पुनरुद्यानदिदृक्षा । काशीक्षेत्र- माहात्म्यश्रवणेच्छा च । शम्भुना पार्वत्या उद्यानदर्शनम् । विस्तरेणोद्यानवर्णनम् । अविमुक्तापरनाम्नः काशीक्षेत्रस्य माहात्म्यवर्णनम् । जैगीषव्यगुहाया उल्लेखः । पिङ्गलाय वरदानम्, मन्दरतपश्चर्या । सगणस्य सोमस्य शम्भोस्तपस्यन्तं मन्दरं प्रति गमनम् । तस्मिन् शम्भोरनुग्रहो वरदानञ्च । प्राग्यज्ञमूर्तिजलदवाहनस्य रुद्रस्य पश्चाद् वृषवाहनत्वे कारणमाख्यातुं पुरातनकथावतारणम् । क्षुवतो ब्रह्मणो वक्त्रात् क्षुपस्योत्पत्तिः । क्षुपदधीचिविवादः । विष्णुदधीचियुद्धम्, स्थानेश्वरस्थाणुतीर्थस्थाणुवटादिमाहात्म्यवर्णनम् ।

३२ द्वात्रिंशेध्याये -

दक्षकृतः क्रत्वनुष्ठानारम्भः । तत्र रुद्राय यज्ञभागाप्रदानम्. पर्वतीप्रकोपः । भद्रकालीहरिभद्र( वीरभद्र) - योरुत्पत्तिः । तत्कृतं क्रतुविध्वंसनम् । मृगरूपेण पलायमानस्य यज्ञस्य वीरभद्रकृतः शीर्षच्छेदः, देवैः कृता देवदेवस्तुतिः । देवानां महेश्वरोदरप्रविष्टानां विविधाद्भुतलोकविचित्रपुरदर्शनम् । कालकर्ण्या उत्पत्तिः तद्भयाद् देवानां भस्मकूटे निलयनम् । भस्मसंसर्गात् तेषां पाशुपतत्वप्राप्तिः, देवैः कृता कालकर्णीस्तुतिः, देवान्प्रति देवदेवस्यानुग्रहः । यज्ञस्य मृगशीर्षतासमापत्तिः,

भद्रकर्णह्रदभद्रेश्वरयोर्महिमा हरिभद्रस्य पुण्यक्षेत्रत्वम्, कुब्जाम्रकब्रह्मावर्त्तयोः समाख्या । दक्षकृता पार्वतीपरमेश्वरयोः स्तुतिः, दक्षं प्रति शिवयोरनुग्रहः । अर्जुनानदी-कनखलयोर्नामनिर्वचनं समाहात्म्यम् ।

३३ त्रयस्त्रिंशेध्याये -

रुद्रवाहनत्वकामनया धर्मयज्ञयोस्तपश्चर्या, रुद्रदर्शनम्. धर्मयज्ञकृता रुद्रस्तुतिः । जन्मान्तरेपि रुद्रवाहनत्वप्राप्तये तयोरभ्यर्थना, यथेष्टवरावाप्तिः । अतुलपुत्रप्राप्त्यर्थं सुरभ्यास्तपश्चर्या । सुरभ्या वृषभोत्पत्तिः, एकादशरूद्राणा- मुत्पत्तिः, गोकन्योत्पत्तिः (सप्तगवोत्पत्तिः) । वृषभचरिताख्यानम्, चरिततृणस्य तृषार्तस्य वृषभस्य समुद्रे जलपानारम्भः, समुद्रशोषणाशङ्कया वडवानलकृतो वृषभनिग्रहः । पीतस्य जलस्याशेषतश्छर्द्दनम्, तथावमानितस्य वृषभस्य रुद्राराधनम् । तुष्टस्य रुद्रस्य वृषभप्रार्थनया वडवानलनिग्रहः पश्चात्तद्विसर्जनं च । देवतानां प्रार्थनया रुद्रेण वृषभस्य लोकोद्वेजकरवेगनिवारणाय प्रभाकरनाम्नो गणस्य सर्जनम् । रुद्रस्य वृषवाहनत्वम्, वृषभस्य सर्वदेवमयत्वम्, तदङ्गावयवेषु सर्वभूतस्थितिकथनम् ।

३४ चतुस्त्रिंशेध्याये -

देवदेवस्य वृषवाहत्वकथोपसंहारः । महादेवेन कथान्तरे कृष्णेत्युक्तायाः पार्वत्या गौरवर्णत्वप्राप्तये पुत्रसंजननार्थं च हिमवच्छिखरे दुश्चरतपश्चरणम् । पार्वत्या अलंकारतोलंकारधाराख्यपुण्यसलिलसरिदुत्पत्तिः । पार्वत्यां तपसि स्थितायां तद्भक्षणोद्देशेन तत्र समागतस्य शार्दूलस्य तत्प्रतीक्षया तस्यामनिमेषदृष्टेस्तद्दिनात्प्रभृति तत्रैव निश्चलतयावस्थानम् । उपमन्यूपाख्यानम्, उपमन्योरनायासोपस्थितक्षीरान्नभोजनप्राप्तये रुद्राराधनम् । यथेप्सित- वरप्राप्तिः, उपमन्युकृता शिवस्तुतिः ।

३५ पंचत्रिंशेध्याये-

सुकेशोपाख्यानम्,- सुकेशस्य पथि गच्छतो वने गर्तान्तर्वीरणस्तम्बाश्रित लम्बनानाधोमुखस्वपूर्वजपित्रादिदर्शनम् । सुकेशस्य तदुद्धरणोपायजिज्ञासा । सुकेशाय पितृकृतोऽपत्योत्पादनोपदेशः, ऊर्ध्वरेतसः सतः सुकेशस्यापत्यो- त्पादनमन्तरेणैव पितॄणामुद्धारार्थं रुद्राराधना, तुष्टेन रुद्रेण सुकेशपितॄणां नरकादुद्धरणं, तस्य गाणपत्य- प्रदानं च ।

३६ षट्त्रिंशेध्याये-

सुकेशतत्पितृसंवादः, पुत्रप्रशंसा पुत्रपदनिरुक्तिश्च । पितृपदसमाख्यानम् । पुत्राणां पितृत्वप्राप्त्युपाख्यानम् । नारकीयगतिजिज्ञासया पितॄन्प्रति सुकेशस्य प्रश्नः ।

३७ सप्तत्रिंशेध्याये-

सुशर्मकृतं नरकवर्णनम्, यमलाचलादित्रयोदशनरकाणां नामकथनम् । तदुच्छ्रयाणां सख्योपकथनम् । पापिनां नाकोयगतिक्रममंक्षेपः, सामान्येन नरकयातनावर्णनम् । यमलाचलनरकतद्गामिजीवतत्कर्मतद्यातनादीनां वर्णनम् ।

३८ अष्टत्रिंशेध्याये-

कूटशाल्मलिनरकतद्गामिजीवतत्कर्मतद्यातनादिवर्णनम् ।

३९ ऊनचत्वारिंशेध्याये-

कालसूत्रनरकतद्गामिजीवतत्कर्मतद्यातनादिवर्णनम् ।

४०. चत्वारिंशेध्याये-

कुम्भीपाकनरकतद्गामिजीवतत्कर्मतद्यातनादिवर्णनम् ।

४१ एकचत्वारिंशेध्याये-

असिपत्रवनतद्गामिजीवतत्कर्मतद्यातनादिवर्णनम् ।

४२ द्विचत्वारिंशेध्याये-

वैतरणीनदीतदन्तःपातिजीवतत्कर्मतद्यातनादिवर्णनम् ।

४३ त्रिचत्वारिंशेध्याये-

अयोधननरकतद्गामिजीवतत्कर्मतद्यातनादिवर्णनम् ।

४४ चतुश्चत्वारिंशेध्याये-

पद्माख्यनरकतद्गामिजीव तत्कर्मतद्यातनादिवर्णनम् ।

४५ पंचचत्वारिंशेध्याये-

महापद्माख्यनरक तद्गामिजीव तत्कर्म तद्यातनादिवर्णनम् ।

४६ षट्चत्वारिंशेध्याये-

रौरवनरक तद्गामिजीव तत्कर्म तद्यातनादि वर्णनम् ।

४७ सप्तचत्वारिंशेध्याये-

महारौरवनरकतद्गामिजीव तत्कर्म तद्यातनादिवर्णनम् ।

४८ अष्टचत्वारिंशेध्याये-

तमोनामनरक तद्गामिजीवतत्कर्म तद्यातनादिवर्णनम् ।

४९ ऊनपंचाशत्तमेध्याये-

तमस्तमतरनरक तद्गामिजीव तत्कर्म तद्यातनादिवर्णनम् ।

५० पंचाशत्तमेध्याये -

नारकीयाणां संसारपरिवर्तापरनाम नानायोनिप्राप्तिक्रमवर्णनम् ।

५१ एकपंचाशत्तमेध्याये -

नारकीयाणां जीवानामुद्धारार्थं सुकेशस्य पुनर्दुश्चरतपश्चरणेन रुद्राराधनम् । रूद्रप्रसादतोऽशेषजीवानां सद्यो नरकादुद्धारः ।

५२ द्विपंचाशत्तमेध्याये -

नरकगतिनिवारकाणां शुभकर्मणां कथनम्, सुकेशोपाख्यानोपसंहारः । काष्ठकूटोपाख्यानम्, भूमन्युनाम्नो गौतमकुलोत्पन्नस्यापुत्रस्य वृद्धब्राह्मणस्य रुद्राराधनतः, सुयशानाम्न्या पत्न्यां काष्ठकूटनामसुतोत्पत्तिः । काष्ठ- कूटस्य विप्रवटोः पित्रोरनुमत्या विद्याध्ययनार्थं गृहान्निर्गत्य च्यवनसविधे गमनम् । तदन्तरे भूमन्योर्दिष्टान्तप्राप्तिः, काष्ठकूटे ऽ ध्ययनं समाप्य गृहं प्रत्यागते भर्तृशोकाकुलायास्तन्मातुरपि प्राणत्यागः । काष्ठकूटस्य रुद्राराधनम् रुद्रानुग्रहेण काष्ठकूटस्य गाणपत्यप्राप्तिः । तत्पित्रोरुज्जीवनम्, तेषां श्वेतपर्वते निवसनम्, काष्ठकूटोपाख्यानौप- संहारः । उपमन्युसुकेशकाष्ठकूटादिषु महादेवस्य योसावनुग्रहः स देव्यां तपसि स्थितायां संवृत्त इति कथनम् ।

५३ त्रिपंचाशत्तमेध्याये -

देव्यास्तपः प्रभावेण लोकानां स्थितिविपर्ययं दृष्टवा भीतानां ब्रह्मादीनां शंकरदिदृक्षया दिव्येन विमानेन मन्दाराचलगमनम् ।

५४ चतुष्पंचाशत्तमेध्याये -

शिवाज्ञया ब्रह्मादीनां ततः परावृत्य हिमवच्छिखरे तपश्चरन्त्या देव्याः समीपे गमनम् ।

५५ पंचपंचाशत्तमेध्याये-

ब्रह्मणोऽभ्यर्थनया पार्वत्यास्तपसो विनिवृत्तिः । ब्रह्मणा वरेणच्छन्दनम् । पार्वत्या प्रथमं व्याघ्रस्य कृते वरयाचनम्। ब्रह्मणा व्याघ्रस्य सोमनन्दिनामनिर्देशनपुरःसरं गणत्वप्रदानम् । ब्रह्मणः सकाशे पार्वत्याः स्वस्य गौरवर्णत्वाय लोकोत्तरमहिमपुत्रप्राप्तये च प्रार्थना । ब्रह्मणा पार्वत्या यथाभिलषितवरप्रदानम् ।

५६ षट्पंचाशत्तमेध्याये -

दुष्कृतकर्मणा दुर्गतिं गतानामपि पितृभक्तिवशाच्छुभगतिप्राप्तेरुदाहरणाय सोमनन्दिनः पूर्ववृत्तमाख्यातुं सप्तव्याधोपाख्यानम् । सप्तानां द्विजशिष्याणां गुरोर्वचनाद् गामानेतुं दशार्णतो माहिष्मतीगमनम् । गुर्वर्थे गामादाय प्रतिनिवर्तमानानां तेषां पथि दुर्भिक्षवशाद् निराहारतया मुमूर्षूणां क्षुधातुराणां गत्यन्तराभावात्- पित्रुद्देशेन तामेव गामालभ्य तन्मांसभक्षणम् । तद्विज्ञाय क्रुद्धेन गुरुणा तेषां कष्टा गतिर्भवित्रीति शापप्रदानम् । गुरुशापवशान्नष्टसंज्ञानां तेषां दशार्णातीरवर्तिनि वने व्याधपुत्रत्वेन जन्मग्रहणम् । व्याधवृत्त्या वने विचरतां तेषां करुणाविष्टचेतसोपाध्यायेन जातिस्मरणयोग्यतापादनेनानुग्रहकरणम् । ततो गृहं

प्रत्यागतानां तेषां तत्पित्रा व्याधेन स्वपूर्ववृत्तकथनम् । व्याधे पितरि स्वर्याते मातरि च संस्थितायां सप्तानामपि तेषां कालञ्जरादिषु क्रमेण मृगादिजन्मप्राप्तिः । चक्रवाकयोनौ वर्तमानानां तेषां सप्तानां मध्ये प्रथमेषां त्रयाणां काम्पिल्याधिपतेरणुहस्य सान्तःपुरस्य सरोवरे जलक्रीडादर्शनाज्जातरागाणां यथाक्रमं ब्रह्मदत्तब्रह्मधन्वपाञ्चालनाम्ना राजपुरोहितमन्त्रि- पुत्रत्वेन जन्मग्रहणम् ।

५७ सप्तपंचाशत्तमेध्याये -

अन्येषां चतुर्णां चक्रवाकानां तत्रैव कस्यचिद्यायावरस्य सुतत्वेन जन्मग्रहणम् । ब्रह्मदत्तस्य पञ्चालब्रह्मधन्वभ्यां सह बहुकालं काम्पिल्ये राज्यसुखभोगः । तदनन्तरं चतुर्णां यायावरसुतानां योगेश्वराणां संकेतश्लोकद्वयश्रवणेन जातस्मृतेर्ब्रह्मदत्तस्य वने गत्वा योगेन तनुत्यागः । पञ्चालस्य तपसा यक्षत्वप्राप्तिः । ब्रह्मधन्वनश्च देवदेव्या आराधनतः कामरूपित्वप्राप्तिः । हालोपाख्यानम्, भलन्दनोपाख्यानम् । कामवशाद् व्याघ्ररूपेण ऋषिं संत्रास्य रिरंसया ऋषिपत्नीं धर्षयतो ब्रह्मधन्वनस्तस्याः शापवशाद् व्याघ्रयोनिं प्राप्तिरिति सोमनन्दिनः पूर्ववृत्तोपसंहारः । ५८ अष्टपंचाशत्तमेध्याये - ब्रह्मणो वरलाभादनन्तरं कृष्णवर्णापहानाय पार्वत्याः सरसि स्नानम् । सरसि स्नातायाः पार्वत्याः शरीरकोशतः कौशिक्युत्पत्तिः । देव्याज्ञया कौशिक्या दुर्गानाम्ना विन्ध्यशिखरे निवसनम् ।

५९ ऊनषष्टितमेध्याये

पार्वत्या गिरिशिखरवृक्षाग्निपरिचारिकादिभ्यो वरदानम् । ततो वनदेवताभिर्वन्दिताया देव्या अग्निं प्रदक्षिणी- कृत्य ऋषीनभिवन्द्य सोमनन्दिना सार्धं वियता जगत्पतेर्देवदेवस्य पत्युःपार्श्वेगमनम् ।

६० षष्टितमेध्याये-

देव्या कौशिकी किमर्थं विन्ध्याचले संप्रेषितेति व्यासस्य जिज्ञासा । प्रसंगाद् विन्ध्यकृतादित्यमार्गावरोधनागस्त्यकृत तदवमानकथाख्यानम्। सुन्दनिसुन्दोपाख्यान प्रसंगेन गोकर्णक्षेत्रोत्पत्त्याख्यानम् । गोकर्णे सुन्दनिसुन्दयो- स्तपश्चर्या, ब्रह्मणः सकाशाद् वरप्राप्तिः ।

६१ एकषष्टितमेध्याये-

वरदृप्तयोः सुन्दनिसुन्दयोर्लोकनाशाय निर्गमः। अत्याचारः, नन्दनवनावमर्दनम् । अमरावतीप्रवेशञ्च, देवानां ततः पूर्वमेव पलायनम् ।

६२ द्विषष्टितमेध्याये

अमरावतीं विजितवतोः सुन्दनिसुन्दयोर्विन्ध्याचले निवसनम् । तयोः संहाराय देवानां तिलोत्तमासर्जनम् । तां प्रति शिवस्यानुग्रहः, मण्डलेश्वरसमाख्या । पिण्डारेश्वरोत्पत्तिः, तिलोत्तमाया विन्ध्याचले गमनम् । सुन्द-निसुन्दयोस्तिलोत्तमादर्शनम् । तिलोत्तमार्थं कलहायमानयोः कामसमूढचेतसोः सुन्दनिन्दयोः परस्परगदाप्रहारेण निधनम् । सुन्दनिसुन्दयोर्मृतयोर्जीवतः शुंभनिशुंभोत्पत्तिः । तयोस्तपश्चर्मा, वरप्राप्तिः, देवदानवसंगरः, शुंभ-निशुंभयोर्विजयश्रीप्राप्तिः, देवानामन्तर्धानम् ।

६३ त्रिषष्टितमेध्याये

देवान् विजितवतोः शुंभनिशुंभयोर्विन्ध्याचले आगत्य निवसनम् । शुंभानुचरस्य मूकदानवस्य विन्ध्यशिखरे कौशिकीदर्शनम् । मूकवचसा कामातुरस्य शुंभस्य देवीसमीपे दूतप्रेषणम् । देव्या स्वस्य युद्धशुल्कत्वज्ञापनम् । दैत्यानामितिकर्तव्यताविषये परामर्शः ।

६४ चतुःषष्टितमेध्याये -

दैत्यानां सैन्यसन्नाहः, शुंभनिशुंभयोर्महता सैन्येन कौशिकीं प्रति प्रयाणम् । देव्याःशरीराद् योगिनीनां प्रादुर्भावः । देव्याः सैन्यसज्जा, युद्धाय निर्याणम् ।

६५ पचंषष्टितमेध्याये

देवीनां दैत्यानां च मिथस्तुमुलं युद्धम् । देवीकृतं दैत्यानां कदनम् । षष्ठीमेघस्वनयोः मृत्युकार्तस्वरयोर्लक्ष्मीद्रुमयोः कान्तिमययोः सरमामुरयोश्चण्डाघनयोर्नियतिखरयोः प्रभावतीधुन्ध्वोः संसक्तं द्वन्द्वयुद्धम् । युद्धे दैत्यसैन्यानां विनाशः । युधि विहतपराक्रमपौरुषाणां दानवयोधमुख्यानां द्विरदवरानधिष्ठाय पुनर्युद्धाय प्रयतनम् ।

६६ षट्षष्टितमेध्याये -

दैत्यानां प्रयत्नं विदित्वा देवीनामपि युद्धार्थं सांग्रामिकगजोत्तमाधिरोहणम् । गजारूढानां देवीदानवानां संकुलं युद्धम् । देवीभिराजौ स्वबलान्यभ्यर्दितानि दृष्ट्वा चतुरङ्गिण्या सेनया शुंभनिशुंभयोः समाजभूमावागमनम् । देव्या सह शुंभनिशुंभयोर्युद्धम्, तुमुलः संघर्षः, देव्या दैत्यसैन्यानामल्पावशेषीकरणम् । देव्या शुंभनिशुंभयोर्ध्वजकवचा- श्वसारथीनां निर्णाशनम् । दिवमुत्पतितयोः शुंभनिशुंभयोर्देव्या ग्रीवयोः संप्रगृह्या निष्पेषणम्, शुंभनिशुंभवधः ।

६७ सप्तषष्टितमेध्याये -

देवैः कृता कौशिकीस्तुतिः, देवदेव्योः कौशिक्यै वरप्रदानम् । कौशिकीविजयमहोत्सवः, विन्ध्यशिखरे देवैर्दिहितः कौशिक्या अभिषेकः, शक्रवाक्यम् ।

६८ अष्टषष्टितमेध्याये -

कौशिक्या स्वदेहोद्भूतानां देवीनां लङ्कादिदेशेषु प्रतिष्ठापनम्, कौशिकीकृतो महिषवधः ।

६९ ऊनसप्ततितमेध्याये -

पार्वत्या गौरवर्णतासादनानन्तरं भर्त्तुर्दर्शनाय हिमवच्छिरवरान्मन्दराचले प्रत्यागमनम् । नन्दिकृता गौरीस्तुतिः । व्याघ्रद्वितीयाया गौर्या भर्त्तुश्चरणाभिवन्दनम् । गौर्या देवदेवस्य सविधे स्वतपश्चर्यावणिरणकथनम् । शिवेन सोमनन्दिनो वरप्रदानम् । सोमस्य सगणस्य शम्भोर्गौर्यास्तपस्थलदर्शनाय हिमवच्छिखरगमनम् । गौरीशिखर-समाख्या, शिवेन हिमवतो वरप्रदानम् । गोरीशिलास्तनकुण्डालङ्कारधारा कोशीनीलकुण्डनिश्चीराग्रारण्यकृष्णा- जिनादिमहिमसमाख्यानम् ।

७० सप्ततितमेध्याये -

देवदेवस्य दर्शनार्थं शक्रशशिवायूनां मन्दराचले आगमनम् । हिरण्यकशिपोर्वधार्थं गृहीतनरसिंहरूपस्य विष्णो रुद्धारार्थं देवदेवस्य समीपे शक्रस्य प्रार्थना । देवदेवानुग्रहेण वायोर्मूर्त्तत्वम् । शशिनो यक्ष्मापहानाय प्रभासे तपश्चरणोपदेशः, प्रसंगागतं हिरण्यकशिपूपाख्यानम् । हिरण्यकशिपोरुत्पत्तिः, श्रीपर्वते हिरण्यकशिपोस्तपश्चर्या । ब्रह्मणो वरलाभः, त्रैलोक्यराज्यकरणम्, श्रीपर्वतोपाख्यानम् । श्रीपर्वतमाहात्म्यम्, श्रीगिरेर्वरप्रदानम् ।

७१ एकसप्ततितमेध्याये -

हिरण्यकशिपोरत्याचारेण पीडितानां देवानां ब्रह्मणा सह विष्णोः समीपे गमनम् । हिरण्यकशिपोर्वधार्थं प्रार्थना, विष्णुना नरसिंहरूपेण हिरण्यकशिपोर्वधः । रुद्रस्य शरभरूपेणावतारः, नृसिंहकृता शरभस्तुतिः । शरभरूपिणा रुद्रेण विष्णोर्नृसिंहरूपात्समुद्धरणम् ।

७२ द्विसप्ततितमेध्याये -

मन्दरे विहरतो देवदेवस्य पार्वत्याः प्रार्थनया विन्ध्याचलमागम्य तत्र मनसा निर्मिते महापुरे योगसन्धानमास्थाय तया सह महासुरतारम्भः । तन्निमित्तात् महोत्पातान् दृष्ट्वा भीतैर्देवैर्विन्ध्यमागत्य शंकरदर्शनार्थं तत्सविधे लक्ष्यदूतरूपेण वह्नेः प्रेषणम् । तत्र नन्दिनोऽनुग्रहेण वह्नेरभ्यन्तरप्रवेशः । वह्नेः प्रार्थनया देवदेवस्य महासुरता-तूष्णीं निष्क्रम्य देवेभ्यो दर्शनदानम् । देव्यास्तनययोगापनोदनाय शम्भोः सुरतविरतये देवानां प्रार्थना । देवानां तुष्ट्यर्थ शम्भुना चिरसन्धारितस्य स्वतेजसो वह्नावाधानम् । महासुरतभङ्गात् पार्वत्याः प्रकोपः । नन्दिनं प्रति रोषेण कर्णोत्पलप्रक्षेपः । ततः स्वर्णशृंगसमीपतो भद्रोत्पलसरोत्पत्तिः । देवताभ्यः पार्वत्याः शापः । कैटभ नाम्ना पार्वत्यास्तत्रावस्थानम् । रमणशिलामहिमा, शङ्करसकाशे देवानामन्धकतपःप्रवृत्तिविज्ञापनम् । शंकरेण देवानां समाश्वासनम्, शंकराज्ञया माहेश्वतेजसौ देवैः शरवणे समुत्सर्जनम् । तत्प्रभावात् तत्र सर्वस्य हिरण्मयीभावः ।

७३ त्रिसप्ततितमेध्याये-

अन्धकोत्पत्तिकथामवतारयितुं प्रसंगात् शंकुकर्णक्षेत्रसमाख्यानम् । पुत्रप्राप्त्यर्थं शंकुकर्णक्षेत्रे हिरण्याक्षस्य तपश्चर्या । परिहासार्थं पार्वत्या शम्भोर्नेत्रनिमीलनम् । शभुनेत्रनिमीलनजन्यान्धकाराद् अन्धकोत्पत्तिः । तपश्चरते हिरण्याक्षाय महादेवेनान्धकसुतप्रदानम् । युवावस्थां प्राप्तस्यान्धकस्य गृहान्निर्गत्य तपसे प्रस्थानम् ।

७४ चतुःसप्ततितमेध्याये-

गङ्गाद्वारवर्त्तिकनखलक्षेत्रेन्धकस्य तपश्चर्या, ब्रह्मणः सकाशाद् वरप्राप्तिश्चक्षुर्लाभश्च ।

७५ पञ्चसप्ततितमेध्याये-

लब्धवरस्यान्धकस्य गृहं प्रत्यागमनम् । हिरण्याक्षकृतश्चिरचिन्तितः कौमुदीमहोत्सवः ।

७६ षट्सप्ततितमेध्याये-

हिरण्याक्षपुरे दानवानां महासमाजः, दैत्यदानवानां सभाप्रवेशः, हिरण्याक्षस्य सभाप्रवेशः ।

७७ सप्तसप्ततितमेध्याये-

दैत्यदानववीराणां परामर्शः, विजययात्राप्रस्तावः, हिरण्याक्षस्य सैन्यसन्नाहः, शुक्रवाक्यम् । शुक्रं पुरस्कृत्य ससैन्यस्य हिरण्याक्षस्य अमरावतीविजयाय निर्याणम् ।

७८ अष्टसप्ततितमेध्याये-

अमरावत्यां देवानां भयसूचका दारुणोत्पाताः, बृहस्पतिवाक्यम्, देवानां सैन्यसन्नाहः, व्यूहरचना, युद्धाय निर्याणम् ।

७९ ऊनाशीतितमेध्याये-

दैत्यपक्षे व्यूहरचना, युद्धारम्भः देवदानवसैन्यानां भीषणः संघर्षः ।

८०. अशीतितमेध्याये-

लोकपालानां दैत्यदानववीरैः सह दारुणं युद्धम् । दैत्यदानववीराणां पराक्रमः ।

८१ एकाशीततमेध्याये-

देवराड्हिरण्याक्षयोर्युद्धम् । अंशनाम्न आदित्यस्य पराक्रमः ।

८२ द्व्यशीतितमेध्याये-

देवदानववीराणां तुमुलं युद्धम् । दैत्यदानववीराणां युद्धस्थलाद्विद्रवणम् हिरण्याक्षवाक्याद्वीराणां पलायनान्नि- वृत्तिः ।

८३ त्र्यशीतितमेध्याये -

देवदानववीराणां पुनस्तुमुलयुद्धारम्भः । संकुलं युद्धम्, उभयोः पक्षयोर्महत् कदनम् ।

८४ चतुरशीतितमेध्याये -

देवदानवयुद्धस्य महायज्ञरूपेण वर्णनम्, देवानां दानवानाञ्च भीषणः संघर्षः, दारुणं द्वन्द्वयुद्धम्, देवेन्द्रहिरण्याक्षयो- र्युद्धम्, ऐरावतस्य विक्रमः । हिरण्याक्षकृतप्रहारेण सशक्रस्यैरावतस्य युद्धभूमेर्विद्रवणम् ।

८५ पंचाशीतितमेध्याये -

वायुविप्रचित्त्योरंशसंवरयोर्भगबलयोः पूषविरोचनयोश्च द्वन्द्वयुद्धवर्णनम् । वाय्वंशभगानां पराजयः, पूष्णः पराक्रमः ।

८६ षडशीतितमेध्याये

पूष्णः पराजयः, बलिमित्रयोर्बाणवरुणयोर्यमान्धकयोर्जयन्तेल्वलयोश्च द्वन्द्वयुद्धम् । मित्रवरुणयमजयन्तानां पराभवः।

८७ सप्ताशीतितमेध्याये -

मयचन्द्रमसो राहवहिर्बुध्नयोरजैकपात्कालनेम्योर्ज्वरकार्तस्वनयोर्द्वन्द्वयुद्धम् ।

८८ अष्टाशीतितमेध्याये

अर्यमप्रह्लादयोर्धरानुह्लादयोर्द्वन्द्वयुद्धम् । ततः पुनर्देवगणानां दैत्यानां च संकुलं युद्धम् । देवानां बलवद्वेगेन दानवानां बलस्य भृशं वेगप्रतिघातः ।

८९ ऊननवतितमेध्याये -

दानवानां त्राणाय हिरण्याक्षस्य युद्धेभिसरणम् । हिरण्याक्षस्य पराक्रमः, देवानां विद्रवणम्, वायोरभिसरणम् । वायोः पराक्रमः, वायुहिरण्याक्षयुद्धम्, दानववीरैः सह वायोः संकुलं युद्धम् । वायोर्विक्रमभङ्गः, सेन्द्राणां देवानां पुनर्दानवान् प्रति अभ्याक्रमणम् । संकुलं युद्धम्, देवेन्द्रविरोचनयोर्युद्धम् । विरोचनस्य पराक्रमः, देवानां पलायनम् ।

९० नवतितमेध्याये -

देवसैन्यं दानववीरैरर्द्यमानं समीक्ष्य अग्नीषोमयोर्युद्धेभिसरणम् । चन्द्रमसः शराघातेन हिरण्याक्षस्य मोहः । सारथिना हिरण्याक्षस्य संग्रामादपवाहनम् । चन्द्रमसः पराक्रमः, दैत्यवीराणां स्तब्धीभावः, सोमेनेवाग्निनापि दैत्यसैन्यानां भृशं कदनम् ।

९१ एकनवतितमेध्याये -

हिरण्याक्षकृता सारथिभर्त्सना । हिरण्याक्षस्य पुनर्युद्धभूमौ प्रत्यागमनम्, हिरण्याक्षस्याग्नीषोमाभ्यां युद्धम् । सोमस्व युद्धादपयानम् ।

९२ द्विनवतितमेध्याये -

अग्निदानवयुद्धम्, अग्नेः पराक्रमः, अग्निमुखोत्थेन धूमेन युद्धभूमौ सर्वत्रान्धकारः, आटिबकसंज्ञं भृशदारुणमन्ध- कारयुद्धम् ।

९३ त्रिणवतितमेध्याये -

अन्धकारविलयनम्, शक्रपुरस्सराणां देवानां प्रसभं दैत्यसैन्यविमर्दनम्, अन्धकासुरपराक्रमः, देवानां पलायनम्, दैत्यानाममरावतीप्रवेशः । हिरण्याक्षस्य विजयात्रारम्भः, वरुणलोकाय प्रस्थानम् ।

९४ चतुर्णवतितमेध्याये

(वरुणलोकविजयः), (यमलोकाभिगमनम्, यमलोकविजयः), नारकीयाणां मोक्षणम्, पितृपतित्वेन विप्रचित्तेः स्थापनम् ।

९५ पञ्चनवतितमेध्याये -

लङ्काभिगमनम्. यक्षपुर्या लङ्काया वशीकरणम् । लङ्कायां प्रह्लादस्याभिषेकः, लोकानां वशीकरणानन्तर देवतानां स्थानेषु दानवेश्वराणां स्थापनम् । अमरावत्यामिन्द्रत्वेनान्धकस्याभिषेचनम् । स्वयं हिरण्याक्षस्याखिलभूर्लोका- नुशासनम् । मूर्तिमतीं पृथिवीं वशीकृत्य नागपाशैर्बद्ध्वा रसातले स्वपुरसमीपतस्तस्यावरोधनम् । हिरण्याक्ष- राज्यवर्णनम् ।

९६ षण्नवतितमेध्याये

देवानां दुरवस्था, ब्रह्मकृतं देवानां समाश्वासनम् । ब्रह्मदत्तयोगप्रभावेण देवानां प्रजाशरीरेषु निलीयावस्थानम् । हिरण्याक्षस्य अत्याचारः ।

९७ सप्तनवतितमेध्याये -

ब्रह्मणो वाक्याद् देवानां श्वेतपर्वतगमनम् । तत्र देवैः कृता विष्णोः स्तुतिः । हिरण्याक्षविनाशाय प्रार्थना, सर्वदेवमयं ( यज्ञ) वाराहशरीरमास्थायैव तमुग्रदैत्यं हनिष्यामीति विष्णुना देवतानां समाश्वासनम् ।

९८ अष्टनवतितमेध्याये -

देवैर्वराहरूपप्रकल्पनम्, विष्णुना वराहशरीरग्रहणम् । वराहरूपस्य विष्णोरङ्गप्रत्यङ्गेषु देवादीनामवस्थिति- वर्णनम् । ऋषिभिर्वराहतेजसः समुद्दीपनम् । वराहस्य देवान्प्रति वचनम्, महादेवेन देवानां समाश्वासनम् । ब्रह्मणा कृतरक्षाविधेर्वराहस्य रुद्रं नमस्कृत्य वरुणालयं प्रति प्रस्थानम् ।

९९ एकोनशततमेध्याये -

वराहस्य महार्णवप्रवेशः, अन्तःसमुद्रे क्रमाल्लोकाल्लोकान्तरं गच्छतो वराहस्य रसातलप्राप्तिः, हिरण्याक्षाय वराहागमनं निवेदयितुं सागरपालस्य दानवस्य अश्मकपुरं प्रति गमनम् ।

१००. शततमेध्याये -

हिरण्याक्षपुरे भयङ्करा उत्पाता, प्रह्लादहिरण्याक्षयोरनिष्टस्वप्नदर्शनम् । दैत्यानां विमर्शः, भीतस्य सागरपालस्य ससंभ्रमं सभाप्रवेशः । तत्कृतं वराहस्वरूपवर्णनम् । वराहप्रवृत्तिविज्ञानाय हिरण्याक्षेण किङ्करगणप्रेषणम् ।

१०१ एकोत्तरशततमेध्याये -

किङ्कराणां वराहसन्दर्शनम् । वराहकिङ्करसंवादः, किङ्कराणां वराहं प्रति शस्त्रकूटैः प्रहरणम् । वराहेण किङ्कराणां निःशेषतया कदनम् ।

१०२ द्व्युत्तरशततमेध्याये -

किङ्कराणां कदनं श्रुत्वा भृशं क्रुद्धस्य हिरण्याक्षस्य स्वासनादुत्पतनम् । विप्रचिचित्तिप्रभृतिभिर्दानवैः समाश्वासनम् । हिरण्याक्षस्याज्ञया प्रह्लादादिप्रमुखवीराणां वराहनिग्रहार्थं निर्याणम् । किङ्करगणान्निपात्याश्मकपुर प्राप्तेन वराहेण पुरद्वारादिविध्वंसनम् । सशस्त्रवर्षं दानववीरैरनुयातस्य वराहस्य पुराद बहिः समां भूमिमुपाश्रित्य योधनम् ।

१०३ त्र्यधिकशततमेध्याये -

वराहस्य प्रह्लादान्धकविप्रचित्त्यादिभिर्दानववीरैः सह सुभीषणं चित्रयुद्धम् । तथा युध्यता वराहेण निखिल- दानवानां विद्रावणम् ।

१०४ चतुरुत्तरशततमेध्याये -

दानवैः पुनर्वराहं प्रति शस्त्रवर्षणम् । दानवप्रहितसर्वशस्त्राणां वराहेण ग्रसनम् । दानवैः सह वराहस्य भीषण युद्धम् । वराहेण निखिलदानवानां विद्रावणम् । नर्दता वराहेण विप्रचित्तिं भ्रामयित्वा तस्य पुरं प्रति प्रोत्क्षेपणम् । विप्रचित्तेर्हिरण्याक्षभवनोपरि वेगेन निपतनम् । हिरण्याक्षेण विप्रचित्तेः समाश्वासनम् । विप्रचित्तिहिरण्याक्ष- संवादः । विप्रचित्तेर्नैराश्यवचनम्, हिरण्याक्षस्य स्वयं युद्धाय गन्तुं निश्चयः ।

१०५ पंचोत्तरशततमेध्याये -

क्रुद्धस्य हिरण्याक्षस्यातिमहता रथेन युद्धाय निर्याणम् । युद्धार्थं पुरान्निर्गच्छतो हिरण्याक्षस्य नानाविधमहोत्पात- दर्शनम् । वराहहिरण्याक्षयुद्धम् । हिरण्याक्षशराघातेन निश्चोष्टस्य वराहस्य महर्षिभिर्देवताभिश्च स्वतेजोभिः समाप्यायनम् ।

१०६ षडुत्तरशततमेध्याये -

तैस्तथाप्यायनादूर्जिततेजसो वराहस्य पुनर्हिरण्याक्षेण सह भीषणं युद्धम् । वराहहिरण्याक्षयोः परस्परमाक्षेपः । दारुणं युद्धम्, क्रुद्धस्य हिरण्याक्षस्य वराहं प्रति भीषणशूलप्रक्षेपः ।

१०७ सप्तोत्तरशततमेध्याये -

अलक्षितेन वेगवता शूलेन हृदि विद्धस्य वराहस्य निसंज्ञतया भूमौ निपतनम् । जगति नानाविधमहोत्पातप्रवृत्तिः, ब्रह्मादिभिः प्रार्थितेन महादेवेन स्वतेजसा वराहाप्यायनम् । तथाप्यायितस्य कृच्छ्रान्मुक्तस्य वराहस्य हिरण्याक्षेण बहुकालं युद्धम् । प्राप्तकालानतिक्रमणार्थं वराहं प्रत्याकाशवाणी, वराहकृतो हिरण्याक्षवधः ।

१०८ अष्टोत्तरशततमेध्याये -

वराहेणान्तः समुद्रे पृथिव्या अन्वेषणम् बन्धनादुन्मोचननम्, रसातलादानीय स्वस्थाने स्थापनं च। ततो देवकृतै- र्दिव्योत्सवैर्नन्दतो वराहस्य मृगीरूपेणोपस्थिताभिर्दिव्याप्सरोभिः सह सुचिरं भूर्लोक एव क्रीडाविहरणेनाव- स्यानम् ।

१०९ नवाधिकशततमेध्याये -

तथा रममाणस्य वराहस्य चित्रलेखाभार्यायां वृकनाम्नः पुत्रस्योत्पत्तिः । यदृच्छया पृथिव्यां विचरतो वृकस्य हिमवच्छिखरे कुमारानुपस्थितौ तदालयमासाद्य बलदर्पादुद्यानद्रुमभञ्जनम् । कोकामुखनाम्ना कुमारानुचरेण वृकस्य बन्धनम् । नारदमुखात्तद्विज्ञाय वराहस्य ससंभ्रमं कुमारगृहगमनम् ।

११० दशोत्तरशततमेध्याये -

कुमारेण सह वराहस्य युद्धम् । कुमारशक्तिप्रहारतो वराहस्य देहावपातः । वराहशरीरादुन्मुक्तेन विष्णुना कृता शंकरस्तुतिः। पाशुपतव्रतोपदेशार्थं प्रार्थना च । देवताभ्यो व्रतोपदेशार्थं शम्भोर्देवैः सह द्युलोकगमनम् ।

१११ एकादशोत्तरशततमेध्याये -

शम्भौ व्रतोपदेशार्थं द्युलोकं गते लोकमातृणां देवीनामृषिपत्नीनां देवयक्षोरगगन्धर्वादिपत्नीनां च धर्मजिज्ञासया पार्वतीसमीप आगमनम् । ताभ्यः पार्वत्या धर्मोपदेशः । अन्नादिदानमहिमा, प्रपाकूपतडागादिकरणमहिमा, वृक्षरोपणादिमहिमा, काञ्चनभूम्यादिदानमहिमा, शय्योपकरण वस्त्रभाजनादिदानमहिमा, कन्यादानमहिमा, गृहगजरथाऽवादिदानमहिमा, विविधधेनुदानमहिमा, गोदानमहिमा, गवामङ्गवर्त्तिनां देवादीनां वर्णनम् । जल-पात्रादिदानमहिमा, असहायदीनमूढव्याधितसाहाय्यकरणमहिमवर्णनम् । दरिद्राय विप्राय सुवर्णदानस्य फल- कथनम् ।

११२ द्वादशोत्तरशततमेध्याये-

एकभक्तोपवासकृच्छ्रचान्द्रायणादिविविधव्रतविधिवर्णनम् । स्त्रीणां भर्त्रनुज्ञयैव धर्माचरणादावधिकार इति कथनम् । पार्वत्या देवमातृभिः सह मन्दरे वनदिदृक्षया भ्रमणम् । तत्र पार्वत्या पुष्पिताशोकतरुपोतकदर्शनम् । बालाशोकदर्शनाज्जातस्नेहायाः पार्वत्या हृदि तस्य पुत्रत्वेन ग्रहणाभिलाषः, तदन्तरे सगणस्यान्धकस्य पातालाद-

भ्येत्य मन्दराचले गमनम् । तत्र तस्य पार्वतीदर्शनान्मनःक्षोभः, तद्विज्ञाय पार्वत्या दूरत एव ततोन्यत्र गमनम् । जगन्मातुः पार्वत्या अनवमानार्थमन्धकाय प्रह्लादस्योपदेशः, मन्दरे सप्तर्षीणां धात्रादिभिः समागमः, तेषां यथा-श्रुतामृतमथनेतिवृत्तकथनम् ।

११३ त्रयोदशोत्तरशततमेध्याये-

ब्रह्मण उपदेशाद् देवासुरकृतं समुद्रमथनम् । तदुत्थोग्रविषस्य शङ्करेण पानम्, अमृतोत्पत्तिः, असुरैरमृतापहरणम् । विष्णुना मोहिनीरूपमास्थाय माययाऽसुरान्मोहयित्वाऽमृतं प्रगृह्य तस्य देवेभ्यः प्रदानम् ।

११४ चतुर्दशोत्तरशततमेध्याये -

कालकूटविषस्योत्पत्तेर्विस्तरेण वर्णनार्थं महादेवस्य नीलकण्ठतासमाख्यानार्थं च सनत्कुमारं प्रति व्यासस्या- नुरोधः , कथाप्रसंगेन वायुबालखिल्यसंवादस्य कुमारवसिष्ठसंवादस्योमामहेश्वरसंवादस्य चावतारणम् । उमया पृष्टेन महादेवेन स्वस्य नीलकण्ठताया इतिवृत्तं कथयितुं कालकूटोत्पत्तेर्विस्तरेण वर्णनम् । समुद्रमन्थनोत्पन्नात् कालकूटाज्जगतस्त्राणार्थं ब्रह्मकृता भवस्तुतिः । ब्रह्मणः प्रार्थनया सुरासुरसंघानां सविस्मयं पश्यतां मया लोकत्रयहिताय तदुग्रविषं निपीय कण्ठे धृतं, ततश्चेयं श्रीकण्ठता ममेति महादेवो पार्वत्यै स्वस्य नीलकण्ठताया इतिवृत्तकथनम् । ब्रह्मकृतस्य निजस्तवस्य माहात्म्यवर्णनञ्च ।

११५ पंचदशोत्तरशततमेध्याये -

अमृतहरणोत्तरसंजातदेवासुरसंग्रामवर्णनम् । युद्धे देवैर्दानवानां कदनम् । देवानां विजयः, प्रह्लादप्रमुखानां दैत्यानां युद्धात्परावर्तनम् ।

११६ षोडशोत्तरशततमेध्याये -

उत्तरोत्तरं युद्धेषु विष्णुना पराजितेन प्रह्लादेन पुत्राय राज्यप्रदानम् । देवासुराणां वर्षसहस्रिकमाटिवकाख्यं युद्धम् । तस्मिन् युद्धे शक्रकृतो विरोचनवधः । विरोचने हते ब्रह्मणा दैत्यराज्ये बलेरभिषेचनम् । देवान् विजित्य बलिना त्रैलोक्यराज्यकरणम् । विष्णोर्वामनावतारः, वामनस्य बलिसद्मगमनम् । बलिवामनसंवादः, बलेः सकाशे वामनस्य पदत्रयोन्मितभूमियाचनम् । बलौ वामनाय भूमिं दातुं प्रवृत्ते प्रह्लादेन निषेधनम् । वलि- प्रह्लादसंवादः, प्रसंगाद् बलिकृतन(म?)ष्टकेतिवृत्ताख्यानम् । बलिना वामनाय संकल्प्य पदत्रयप्रदानम् । बलेरुपरि ससाधुवादं देवैः कृता पुष्पवृष्टिः ।

११७ सप्तदशोत्तरशततमेध्याये -

प्रतिग्रहानन्तरं वामनस्य पदत्रयार्थं विक्रमणम् । तद् दृष्ट्वा दैत्यानां त्रिविक्रमस्योपरि शस्त्रास्त्रैराक्रमणम् । देवदानवयुद्धम्, दैत्यानां पराजयः, ब्रह्मणा बलेः समयकरणम् । देवानां राज्यप्राप्तिः, बलेः पातालप्रवेशः, देवैः कृतो वामनस्तुतिः । देवानां स्तुत्या संजाततोषातिशयस्य वामनरूपस्य विष्णोः स्वाभिमानतो योगभ्रंशः । योगभ्रष्टे तस्मिन् तदन्तरेणासुरीपाप्मायाः प्रवेशः । तत्कृता च विष्णोश्चिरन्तनी वामनरूपतापत्तिः ।

११८ अष्टादशोत्तरशततमेध्याये -

प्रतिग्रहकृतया पाप्मयाविष्टस्य विष्णोस्तत्पाप्माप्रहाणार्थं ब्रह्मणो वाक्यात् सप्तर्षिप्रभृतिमुनिजनसहितानां देवानां वामनमादाय तीर्थयात्रायै प्रस्थानम् । शुकोपाख्यानम् - सुषुम्णापुष्करिणीप्रभृतिकतिपयपुण्यतीर्थयात्रा- नन्नरमग्रतो गच्छतां तेषामेकत्र  शुष्कतरुकोटरे क्षुत्तृड्भ्यां शुष्यतः शुकस्य तैर्दर्शनम् । शुकशक्रसंवादः., शुककृतं तरुमहिमवर्णनम् । शुकाय शक्रेण वरदानम्, शक्रस्य वरदानतस्तस्य शुष्कतरोः पुनरुज्जीवनम्, शुकस्य च ब्रह्मलोक- प्राप्तिः ।

११९ ऊनविंशोत्तरशततमेध्याये -

( १) गौतम्युपाख्यानम्, - कृमिलापुर्यामेकस्या गौतमीनाम्न्या विधवाया ब्राह्मण्यास्तपसि सक्तायास्तद्बालपुत्रस्य कृष्णसर्पदंशनाद् मरणम् । अर्जुननाम्नः व्याधेन गौतम्यास्तद्वृत्तान्तकथनम् । गौतम्या विलापः । व्याधेन सर्पस्य निग्रहणम्, सर्पव्याधसंवादः, गौतम्यास्तपसो भीतानां कालमृत्युनियतिकृतान्तयमनां बालमृत्यु ( निमित्त) कारणत्वेन सर्पाद्युत्तरोत्तरकृताभियोगानां सर्वेषामेकैकशस्तत्रागमनम् । यमगौतमीसंवादः, यममुखाद् देहिनां जन्ममरणयोः स्वकृतशुभाशुभकर्मनिमित्तत्वश्रवणाद् गौतम्या मनसो दुःखशमनम् । देवानां वरदानेन मृतबालस्य पुनरुज्जीवनम् ।

(२) यातुधान्युपाख्यानम् - कृमिलातो गच्छतां देवनां कृत्यानामतीर्थस्थलप्राप्तिः, कृत्यासमाख्यानप्रसंगागतं तृणबिन्दूपाख्यानम् । याजनप्रार्थनानङ्गीकारात् प्रकुपितेन तृणबिन्दुना सप्तर्षीन् प्रति कृत्याप्रेषणम् । सप्तर्षीणां विनाशाय शुभां वापीमुपाश्रित्यान्तरं प्रतीक्षमाणाया यातुधान्यपरनाम्न्या कृत्यायाः परिव्राड्वेषेणेन्द्रेण हननम् । तीर्थयात्रोपसंहारः, विष्णोरश्वमेधेन यजनम् । तत्र शंकरस्यागमनम् ।

१२० विंशत्युत्तरशततमेध्याये -

भगवतः शूलिनः पार्वत्या सह रजन्यां श्मशानदर्शनायाभिगमनम् । क्रमादुज्जयिनीं प्राप्तेन भगवता शूलिना श्मशाने संस्कारार्थमानीतं मृतं विप्रबालमुज्जीव्य तस्य गणत्वप्रदानम् । ततो गत्वा, तीर्थयात्रां समाप्य हिम- वच्छिखरे यज्ञवरेण यजतां देवानां महादेवेन दर्शनदानं वरेणच्छन्दनं च ।

१२१ एकविंशत्युत्तरशततमेध्याये -

विष्णोः पाप्माप्रहाणार्थं शंभुसविधे देवानां प्रार्थना । महादेवेन तत्र गिरौ शूलारोपणेन जलधारानिःसारणम् । तज्जले स्नपितस्य विष्णोः शरीरान्मूर्तायाः पाप्माया

अभिनिःसरणम् । विष्णुना पाशुपतव्रतवरणम्, तुष्टेन हरेण विष्णवे स्वशरीरार्धप्रदानम् । तन्निमित्तं च तस्य विष्णुशंकरत्वम् (हरिहररूपत्वम्) । त्रैलोक्यराज्यार्थे पुनर्देवासुर- युद्धम् । महादेवस्याज्ञया परशुरामेणैकाकिना युधि सर्वेषां सैंहिकेयगणानां हननम् । दानवानां पलायनम्,- देवैर्जामदग्न्याय वरप्रदानम् ।

१२२ द्वाविंशत्युत्तरशततमेध्याये -

कालनेमिपराक्रमः, केशवकालनेमियुद्धम् । विष्णुकृतः कालनेमिवधः, तारकमययुद्धोपसंहारः । पुरिश्चन्द्र- क्षेत्रसमाख्यानम्, नारावणपाप्माप्रहाणाय देवताभिः कृतं त्र्यम्बकस्तोत्रम् । विष्णोः कृते देवताभिः पुरश्चरणा- नुष्ठानम् । महादेवाज्ञया सर्वैः पाशुपतव्रताचरणम् । विष्णोस्तपश्चर्या, विष्णोः पाप्माप्रहाणम् । हरिश्चन्द्र- क्षेत्रसमाख्यानम् ।

१२३ त्रयोविंशत्युत्तरशततमेध्याये -

जामदग्न्येन पुरिश्चन्द्रे महादेवदर्शनम् । महादेवेन जामदग्न्याय चिरजीवित्वादिवरसप्तकप्रदानपूर्वकं सरहस्य - धनुर्वेद( विद्याज्ञान) प्रदानम् । जामदग्न्येन पितुर्वैरनिर्यातनार्थं पृथिव्या निः क्षत्रत्वकरणम् । जामदग्न्यकृतः श्रियाः परिभवः । जामदग्न्येन यज्ञानुष्ठानम्, कश्यपाय पृथ्वीप्रदानम् । जामदग्न्यस्य काश्यपभूमिं परित्यज्य समुद्रान्तर्द्वीपे निवसनम् ।

१२४ चतुर्विंशत्युत्तरशततमेध्याये -

कश्यपपालितायाः पृथिव्या अधोगमनम् । कश्यपस्य स्वतपोबलात् स्वयं पृथ्वीभावेनावस्थानम्, पृथिव्या कश्यपस्य प्रसादनम्, पृथिव्याः कश्यपदुहितृत्वम् ।

१२५ पंचविंशत्युत्तरशततमेध्याये-

विप्रचित्तेर्भस्त्रापदे तपश्चर्या, तस्य महादेवाद्वरप्राप्तिः, देवासुरसंग्रामः, लोमहर्षणं ध्वजयुद्धम् । इन्द्रकृतो दानव- संहारः ।

१२६ षड्विंशत्युत्तरशततमेध्याये-

व्यासजिज्ञासया भस्त्रापदक्षेत्रसमाख्यानाय गङ्गावतरणमुपाख्यातुं सगरोपाख्यानम् सगरनामसमाख्या, सगरस्या- श्वमेधेन यजनम्, अश्वापहरणम्, अश्वान्वेषणाय सागरोत्खननम्, कपिलावमाननात् सगरसुतानां संहारः, सगरा- ज्ञयांशुमतः कपिलाश्रमगमनम् ।

१२७ सप्तविंशत्युत्तरशततमेध्याये-

अंशुमत्कपिलसंवादः, अंशुमतो वैनतेयेन समागमः, सगराणामुद्धाराय वैनतेयकृतो गङ्गानयनोपदेशः, कपिलाश्रमा- दश्वप्रत्यानयनम्, सगरस्य यज्ञसमाप्तिः, गङ्गानयनाय सथावसरं तपश्चरतोरंशुमद्दिलीपयोर्मनोरथसिद्धिं विनैव स्वर्गमनम, गङ्गावतारणोपक्रमः, भगीरथस्य तपश्चर्या । ब्रह्मणो वरप्राप्तिः, भगीरथेन शंकरतोषणम्, गङ्गाया गर्वः, शंकरस्य कोपः, शंकरप्रसादनार्थं देवैः कृता रुद्राणीस्तुतिः, तत्र तस्या लोकजनीत्वोपपादनाय देवैर्भस्त्राशब्दप्रयोगः पार्वत्या शिवप्रसादनम्, शिवेन गङ्गावेगधारणाङ्गीकरणम् । भस्त्रापदक्षेत्रनिरुक्तिः भस्त्रापदभस्मेश्वरयोर्महिम- वर्णनम् ।

१२८ अष्टाविंशत्युत्तरशततमेध्याये-

भस्त्रापदे देवताभिः शिवलिङ्गानि संस्थाप्य स्वस्वनाम्मा तीर्थानां स्थापनम् । वज्रोपल (भस्त्रापद?) नाम्नि हिमवच्छिखरे गङ्गावतरणप्रेक्षणाय महतः समाजस्योपस्थितिः, उमासहायस्य देवदेवस्य तत्रागमनम् । महादेव- वचनाद् भगीरथेन गङ्गायाः संस्मरणम्, गङ्गायाः स्वर्लोकादवतरणम्, दिवोवतरन्त्या गङ्गाया मध्येपथ- माकाशगङ्गादिनामनिष्पत्तिः, तस्या एव पुनस्त्रिस्रोतादि

नामान्तरनिष्पत्तिः । त्रिभिर्वेगैर्महता जवेन पतन्त्या गङ्गायाः शिवेन स्वजटाभारे ग्रहणम् । जटाजूटेवरुद्धायास्तस्यास्तत्रैव चिरकालमवस्थानम् । देवानां प्रार्थनया शिवेन स्वजटाभाराद् गङ्गाया अवमोचनम् । बिन्दुसरस उत्पत्तिः, गङ्गायास्त्रिभिः स्रोतोभिस्ततो निःसरणम् । तस्या मध्यस्रोतसो भागीरथीति समाख्या । गङ्गाद्वारोत्पत्तिः, गङ्गावतरणस्थलस्य भस्त्रापदमित्याख्या ।

१२९ ऊनत्रिंशदुत्तरशततमेध्याये-

हालाहलयुद्धाख्यानम्, बलस्य नेतृत्वे हालाहलाख्यस्य दानवगणस्य देवैः सह संग्रामः, प्रथमतोसुराणां विजयः, पश्चान्महादेवानुग्रहाद्देवानां विजयः, इन्द्रेण बलस्य हननम् । असुराणां पराजयः, अन्धकारयुद्धम् । देवान्तकस्य तपश्चर्या, रुद्रप्रसादात्तामसीं मायामाश्रित्य देवान्तकेन देवानां प्रबाधनम् । ऋषीणां वचनाद् देवैरसुराणां मोहाया

प्सरसां प्रेषणम्, अप्सरोरूपमोहितानां दानवानां परस्परयुद्धेन स्वतः संहारः, अवशिष्टानां देवैः संहरणम् ।

१३० त्रिंशदुत्तरशततमेध्याये-

अन्धकाख्यानम् (पूर्वप्रकृतम्), अन्धकेन मन्दरप्रस्थे पार्वत्या दर्शनम् । पार्वतीरूपदर्शनात् क्षुभितस्य कामोपहत- चेतसोन्धकस्य तां प्रति दुष्टभावना । प्रह्लादस्योपदेशः, अन्धकस्य दुराग्रहः । अन्धकस्य दुष्टभावं बुद्ध्वा कोपाच्छूलमुद्यम्य तं हन्तुं प्रवृत्तायाः पार्वत्या महादेवेन निषेधनम्, पार्वत्यास्ततोन्यतो गमनम्, अन्धकेन सह योद्धुं महादेवाज्ञया नन्दिना सकलगणानामाह्वानम्, सगणानां सकलगणनायकानां महासमाजस्य तत्रोपस्थितिः, उपस्थितानां गणानां नन्दिना महादेवाय रूपगुणसंख्यादिविज्ञापनम् ।

१३१ एकत्रिंशदुत्तरशततमेध्याये-

महादेवेन गणानां महासमाजस्य निरीक्षणम्, संख्यानश्रवणम्, महादेवाज्ञया नन्दिनः संरक्षकतायां बृहस्पतिना- ग्नावाहुतिप्रदानम् । मन्दरमारुरुक्षूणामसुरबलानां प्रमथैः सह संघर्षः, अन्धकबलानां मन्दरारोहणम् । मन्दरस्थि- तिवर्णनम् ।

१३२ द्वात्रिंशदुत्तरशततमेध्याये-

शुक्रेणान्धकाय प्रमथानीकनायकानां परिचयप्रदानम्, अन्धकस्य प्रार्थनया शुक्रेणासुरबले पर्वतव्यूहरचनम् । महादेवाज्ञया बृहस्पतिना प्रमथानीके वज्रव्यूहरचनम् ।

१३३ त्रयस्त्रिंशदुत्तरशततमेध्याये-

प्रमथासुरसंग्रामदर्शनार्थं विमानकोटिभिरुपस्थितानां देवानां समाजैर्नभोमण्डलसमाच्छादनम् । प्रमथासुरसैन्ययो- र्युद्धोपक्रमः, (गणयुद्धारम्भः) ।

१३४ चतुस्त्रिंशदुत्तरशततमेध्याये-

प्रमथासुरसैन्ययोः संकुलं युद्धम्, युद्धभूमौ शोणितौघवहानदीप्रवृत्तिः ।

१३५ पंचत्रिंशदुत्तरशततमेध्याये -

प्रमथासुरसुसैन्ययोस्तुमुले युद्धे वर्तमाने शंकुकर्णप्रभृतीनां दशानां प्रवरगणेश्वराणामसुरबलान्तःप्रवेशः, असुराणां व्यूहभङ्गः, उभयोः पक्षयोर्दारुणः संघर्षः ।

१३६ षट्त्रिंशदुत्तरशततमेध्याये -

विरोचनस्य प्रमथानीके प्रवेशः, विरोचनस्य पराक्रमः, विनायकविरोचनयुद्धम् । विनायकपराक्रमः, बाणकुण्डोदर- युद्धम्, बाणविनायकयुद्धम्, विनायकराहुयुद्धम् । गणेश्वरदानवेश्वराणां संसक्तयुद्धम् ।

१३७ सप्तत्रिंशदुत्तरशततमेध्याये -

प्रमथासुरसैन्यनायकानां वीराणां तुमुलं द्वन्द्वयुद्धम् । रथगजवाजिपादातानां दारुणः सन्निपातः ।

१३८ अष्टत्रिंशदुत्तरशततमेध्याये -

प्रमथासुरसैन्ययोर्महता वेगेनान्योन्यमाक्रमणम् । घोरः संग्रामः, नन्दिनो जम्भकुजम्भाभ्यां दारुणं युद्धम्, कुजम्भवधः ।

१३९ ऊनचत्वारिंशदुत्तरशततमेध्याये -

क्रुद्धेन जम्भेन नन्दिनं प्रति दारुणपरिघप्रक्षेपणम् । शंकुकर्णेन जवान्मध्येमार्गं तत्परिघप्रग्रहणम् । शंकुकर्णस्य परिघमुद्यम्य जम्भं प्रति धावनम्, महान् कोलाहलः । तद्युद्धदर्शनलालसया सान्धकानां प्रमथासुरसैन्यप्रवीराणां तदानीं कलहाद् विरम्य कौतूहलेन तत्र तथैवावस्थानम् ।

१४० चत्वारिंशदुत्तरशततमेध्याये -

जम्भमुद्दिश्य धावन्तं शकुकर्णं प्रति वृत्रस्याभिधावनम् । वृत्रशंकुकर्णयोर्दारुणं युद्धम् ।

१४१ एकचत्वारिंशदुत्तरशततमेध्याये -

वृत्रस्य पराक्रमः, विट्पतिवृत्रयोर्युद्धम् । विट्पतिं प्रति दैत्यवीराणां सम्भूयाक्रमणम्, प्रमथासुरवीराणामति- दारुणं युद्धम् ।

१४२ द्विचत्वारिंशदुत्तरशततमेध्याये -

कार्त्तस्वनपराक्रमः, कार्त्तस्वनेन प्रमथानामाकुलीकरणम्, विट्पतिकार्त्तस्वनयोर्युद्धम्, कार्त्तस्वनवधः ।

१४३ त्रिचत्वारिंशदुत्तरशततमेध्याये -

विट्पतिं प्रति क्रुद्धानां प्रह्लादाद्यसुरवीराणामभ्याक्रमणम् । तद् दृष्ट्वा सोमनन्द्यादिप्रमुखगणेश्वराणां प्रत्याक्रम- णम् । संसक्तानां प्रमथासुरवीराणां भीषणं युद्धम् ।

१४४ चतुश्चत्वारिंशदुत्तरशततमेध्याये -

प्रमथासुरवीराणां तुमुलं संसक्तयुद्धम्, विनायककृतो हुण्डतुहुण्डवधः ।

१४५ पंचचत्वारिंशदुत्तरशततमेध्याये -

प्रमथासुराणां संकुलं युद्धम् । जम्भवधः, असुरगणेश्वराणां महान्सन्निपातः । स्वयंप्रभेण दानवसैन्यसागरप्रमथनम्. अन्धकविरोचनयोर्विमुखीकरणम् । विमुखीभूतस्यान्धकस्य शुक्रसकाशे गमनम् ।

१४६ षट्चत्वारिंशदुत्तरशततमेध्याये -

अन्धकेन शुक्रसविधे दीनमनसा दुःखनिवेदनम् । शुक्रेणान्धकस्य समाश्वासनम् । रणे निपतितानां दानववीराणां शुक्रेण समुत्थापनम् । प्रमथासुरवीराणां पुनर्भीमनादः प्रतिसमागमः ।

१४७ सप्तचत्वारिंशदुत्तरशततमेध्याये -

असुरगणेश्वराणामतिभैरवः संघट्टः, जम्भविनायकयुद्धम् । प्रमथासुराणामाश्चर्यकरं युद्धम् । नन्दिना महादेवाय लोकातिशायि भार्गवकर्म निवेदनम् । महादेवाज्ञाया नन्दिना हठात् शुक्रमपहृत्य तस्य तत्समीपे उपस्थापनम् । महादेवेन सजीवस्य (जीवतः) शुक्रस्य निगिरणम् ।

१४८ अष्टचत्वारिंशदुत्तरशततमेध्याये -

शुक्रेपहृतेन्धकस्य विषादः, गणदानवानां पुनर्भीषणं युद्धम् । नन्दिनं प्रति जम्भस्य गजेनाभियानम् । विनायकेन जम्भगजस्य मध्येमार्गं विनिपातनम्, विनायकस्य जम्भकुजम्भाभ्यां दारुणं युद्धम् । विनायकसाहाय्यार्थ- मुपस्थितानां गणेश्वराणां दानववीरैः सह संकुलं युद्धम् ।

१४९ ऊनपंचाशदुत्तरशततमेध्याये -

अन्धकेन तदनुयायिदानववीरैश्च प्रमथगणानामुपरि दारुणशस्त्रास्त्रवर्षणम् । दानववीरैः प्रमथानां कदनम्, रुद्रद्वारपालादीनां दानवैः सह संघर्षः ।

१५० पंचाशदुत्तरशततमेध्याये -

रुद्रोदरान्तर्भ्राम्यमाणस्य विवशस्य शुक्रस्य बहुविधविचित्रलोकदर्शनम् । वर्षशतानन्तरं महादेवप्रसादात् शुक्रस्य शुक्रवल्लिङ्गान्निःसरणम् । शुक्रमार्गेण तथानिःसरणात् भार्गवस्य शुक्रत्वं महादेवपुत्रत्वञ्च । शुक्रनिर्मुक्ते- र्दर्शनाद्दानवसैन्ये महान् हर्षः,

प्रमथासुराणां पुनर्भीषणः संघर्षः । प्रमथैः समर्दितानां ( पूर्वमेव) सागरसमा- श्रयणम् । युद्धादपसृत्य सागरं श्रितात् दानवान् प्रति शुक्रस्य शापः, शुक्रेणान्धकस्य समाश्वासनम् । शुक्रेण संरक्षितस्यान्धकस्य द्विगुणेनोत्साहेन युद्धे प्रवृत्तिः । अन्धकेन शस्त्रप्रहारैर्गणेश्वराणां स्तब्धीकरणम् । गणेश्वराणां दानवैः सह पुनर्भयानकं युद्धम् ।

१५१ एकपंचाशदुत्तरशतमेध्याये-

अन्धकबलार्दितानां प्रमथानां साहाय्यार्थं ब्रह्मणो वचनात् शक्रादयखिलदेवानां युद्धभूमावतरणम्, प्रमथैर्देव- गणैश्च दानवबलानां व्याकुलीकरणम्, अन्धकस्य रुद्रमुद्दिश्य वेगेनाभिसरणम्, नन्दिना तस्य वारणम्, नन्द्यधन्कयो- र्दारुणं युद्धम्, अन्धकस्य विरथीभावः, रथान्तरारोहणम्, पुनः सुदारुणयुद्धप्रसक्तिः ।

१५२ द्विपञ्चाशदुत्तरशततमेध्याये-

देवदानवानां द्वन्द्वयुद्धम्, नन्दिना सहान्धकस्याति भयंकरं युद्धम्, अन्धकस्य मायायुद्धम्, एकेनान्धकेन सर्वेषां देवानां प्रमथगणेश्वराणां च व्याकुलीकरणम् ।

१५३ त्रिपंचाशदुत्तरशततमेध्याये-

अन्धकस्य प्रमथगणेश्वरैस्सहातिदारुणं युद्धम् । प्रमथैर्दानवानां प्रमथनम्, युद्धभूमौ दुस्तरशोणितनदीप्रवृत्तिः । देवदानवानां समाकुलमद्भुतं युद्धम् ।

१५४ चतुःपञ्चाशदुत्तरशततमेध्याये-

क्रुद्धानां दानवेश्वाराणां नन्दिनं प्रति अभिद्रवणम् । नन्दिनो दानववीरैः सह भीषणं युद्धम् । नन्दिना शरेण बलेर्निपातनम् । बलौ निपतिते दानवानां युद्धाद्विद्रवणम् । अन्धकेन दानवेन्द्राणां संबोधनम्, अन्धकवचसा दानवानां पुनर्युद्धाय

प्रतिनिवर्तनम्, अन्धकस्य नन्दिनं प्रति रथेनाभियानम्, नन्द्यन्धकयोस्तुमुलं द्वैरथं (युद्धम्), अन्धकस्य युद्धेद्भुतः पराक्रमः, अन्धकशरवेधव्याकुलानां देवगणानां प्रमथगणेश्वराणाञ्च नन्दिन- मेकं विमुच्य सर्वेषां युद्धाद्विद्रवणम्, ततोसुरबले घोरः सर्वप्राणिकृतः सबादित्ररवो महान् सिंहनाद ।

१५५ पंचपंचाशदुत्तरशततमेध्याये-

अन्धकेन भग्नपौरुषाणां देवानां शूलपाणेः शरणे गमनम्, देवानां प्रार्थनया महादेवेन शूलं संप्रेष्य तेन हृदि विद्धस्यान्धकस्य स्वसमीप आनायनम्, शूलविद्धान्धकहृदयविनिःसृतशोणितबिन्दुभ्योन्धकसरूपाणां योधानां समुत्पत्तिः, महादेवाज्ञया मातृभिस्तेषां भक्षणम् । अन्धकस्य वर्षसहस्रं सूर्यतेजसा शूलाग्रे पचनम् । ततो जनितसात्विकभावेनान्धकेन चन्द्रार्धमौलेः स्तवनम्, सुतुष्टेन महादेवेनान्धकाय गाणपत्यप्रदानम्, ब्रह्मकृतो रुद्रस्तवः ।

१५६ षट्पंचाशदुत्तरशततमेध्याये -

अन्धकमथनानन्तरं महादेवेन देवानां गणानाञ्च यथोचितमर्चनेन विसर्जनम् ।

१५७ सप्तपंचाशदुत्तरशततमेध्याये -

देवगणविसर्जनानन्तरं शङ्करस्य स्वभवनप्रवेशः । गणप्रवरीकृतस्यान्धकस्य महादेवेन पार्वत्याः स्वसुतत्वकथनम् । पार्वत्या चान्धकस्य पुत्रेति संबोधनम् । अन्धककृता पार्वतीस्तुतिः । अन्धकं प्रति पार्वत्या अनुग्रहः ।

१५८ अष्टपंचाशदुत्तरशततमेध्याये -

महादेवस्याग्रतः पार्वत्याः पुत्र विषये जिज्ञासा, महादेवकृतं पुत्रमहिमवर्णनम् । कोष्ठजात् पुत्राद् भूमिरुहस्य (कृतकपुत्रत्वम्), पुत्रस्य श्रेष्ठतरत्वकथनम्,

पुत्रशब्दनिरूक्तिः, तरूणां पुत्रप्रतिकृतित्वम् , तरुपुत्रकग्रहण- विधिकथमम्, पार्वत्या महादेवसविधे अशोकतरुपुत्रग्रहणेच्छाप्रकटनम्, महादेवेन तदनुमोदनम्, प्रसङ्गात् स्त्रीणां भर्त्रनुज्ञयैव धर्माद्यनुष्ठानाधिकारितायाः कथनम् ।

१५९ ऊनषष्ट्युत्तरशततमेध्याये -

पार्वत्या भशोकतरुपुत्रग्रहणोत्सवोपक्रमः, महादेवाज्ञया अशोकतरुपोतकसन्निधौ उत्सवस्थले सुमालिनाम्ना पिङ्गलयक्षेण यथावश्यकान्नादिसयोजनेन सामग्रीसज्जीकरणम्, महादेवाज्ञया विप्राग्र्याणां लोकपालादीनां चामन्त्रणार्थं नन्दिनः प्रस्थानम्, नन्दिनः प्रथमतो वरुणालयगमनम् तत उदयाचलगमनम् ।

१६०. षष्ट्युत्तरशततमेध्याये -

ततो नन्दिनो यथाक्रमं सूर्य - धनेश - यम - शक्र - लोकगमनम् ।

१६१ एकषष्ट्युत्तरशततमेध्याये -

शक्रलोकान्नन्दिनो ब्रह्मलोकगमनम्, ततः क्षीरसागरगमनम् दिवि भुवि च यथोपदृष्टश्रुतान् विप्रानामन्त्र्य नन्दिनो मन्दरे प्रत्यावर्तनम् ।

१६२ द्विषष्ट्युत्तरशततमेध्याये -

नन्दिनः कार्यात् प्रसन्नेन महादेवेन पार्वत्या अनुमोदेन नन्दिने वरदानम् । सायं सन्ध्योपासनानन्तरं सगणस्य सोमस्य महादेवस्य हर्षान्नृत्याचरणम् । अशोकतरुपुत्रग्रहणार्थं महादेवाज्ञया पार्वत्यास्तद्रात्रौ यथोक्तनियमेनावस्थानम्, परेद्युः प्रभात एव पार्वत्या भर्त्रा सह अशोकतरुपोतसन्निधौ गमनम्, ब्रह्मादिदेवानां महर्षि-प्रवराणामन्येषां च महतः समाजस्य तत्रोपस्थितिः, उमया ऽ शोकतरुपोतकस्य वस्त्रभूषादिना समलंकरणम् । विप्राणां वेदघोषैः पुण्याद्वशब्दैश्च गुञ्जायमाने

हर्षोल्लासयुक्ते महोत्सवे गृहीतविप्रानुज्ञयामया सविध्यशोक- तरुग्रहणम्, सोमेन शिवेन सम्यक्सभाजितानां सत्कृतानां पूजितानां तर्पितानां विप्राणां देवादीनां च स्वस्वस्थानगमनम्, अशोकतरुपुत्रग्रहणमहोत्सवसमाप्तिः ।

१६३ त्रिषष्ट्युत्तरशततमेध्याये -

व्यासस्य प्रार्थनया पुनः सनत्कुमारकृतः पूर्वप्रकृतस्कन्दोत्पत्तिविवरणारम्भः वह्निना शम्भुतेजसो गङ्गाया सङ्क्रामणम्, तदुग्रतेजो धारयितुमक्षमया गङ्गया तस्य श्वेतपर्वतशिखरवर्त्तिशरस्तम्बे समुत्सर्जनम्, ततश्च स्कन्दोत्पत्तिः । स्कन्दस्य । विश्वामित्रेण जातकर्मसंपादनम्, कृत्तिकादीनां मातृणां च तत्रोपस्थितिः, स्कन्देन गिरिशृङ्गस्य पातनम् शक्रस्य तत्रागमनम्, शक्रस्कन्दविवादः, शक्रदर्पदलनम्, शक्रकृता सेनापत्यं ग्रहणप्रार्थना, सामस्य शिवस्यागमः, वह्निस्वाहागङ्गादीनां च तत्रोपास्थतिः, स्कन्देन षोढामूर्त्तिधारणम्, महादेवेन स्कन्दाय चतुर्विध स्त्रिग्रामप्रदानम्, पार्वत्या वह्न्यादिभिश्च तस्मै विविधवस्त्रालंकारादिप्रदान. ब्रह्यादिसर्वदिवौकसा तत्रागमनम्, देवानां तारकसंहाराय स्कन्दस्य सेनापत्येभिषेचनार्थं शिवसविधे प्रार्थना, महादेवेन तदनुज्ञानम् ।

१६४ चतुःषष्ट्युत्तरशततमेध्याये -

स्कन्दमादाय तस्याभिषेकार्थं ब्रह्मादीनां समन्तपञ्चके सरस्वत्यास्तीरभूमावागमनम्, तत्र सुवर्णकलशसिंहासना दीनामुपकरणानां सज्जीकरणम्, गृहीतविविधोपहारस्य सर्वलोकसमाजस्य तत्रोपस्थितिः, बृहस्पतेराचार्यत्वे ज्वलनं समिध्य समग्राभिषेचनिकविधिसमापादनम्, महति समारोहे जयवाद्यवेदगीतघोषैः सह स्कन्दस्य सेनापत्येभिषेचनम्, स्कन्दाय विविधोपहारप्रदानम् तस्य विविधोपकरणैरलङ्करणम्, ब्रह्मादिभिरखिलैस्तत्रो- पस्थितैः स्कन्दाय नानापारिषदप्रदानम्, शिवेन पार्वत्या च स्वपुत्राय नानारूपधरानेकमहापारिषदप्रदानम् । कौशिक्या स्कन्दायानेकमातृगणप्रदानम्, एवं विविधोपकरणैः सज्जीभूतस्य स्कन्दस्य तारकविजयाय प्रस्थानोपक्रमः ।

१६५ पंचषष्ट्युत्तरशततमेध्याय - सन्नद्धसैन्यानां सुराणां स्कन्दं पुरोधाय दैत्यान्प्रत्यभियानम्, तद्विज्ञाय दैत्यानां ससंभ्रमं सैन्य सन्नाह्य युद्धार्थं निर्गमनम् देवासुरसैन्ययोस्तुमुलः संघर्षः, तारकस्य युद्धार्थमभिसरणम्, स्कन्दतारकयोर्युद्धम्, तारकवधः, समस्तदैत्यसैन्यानां विनाशः ।

१६६ षट्षष्ट्युत्तरशततमेध्याये-

पार्वात्यः प्रार्थनया महादेवेन स्वनाम्नामर्थप्रबोधनम् (नामनिर्वचनम्) नामोच्चारणमाहात्म्यकथनं च, श्वेतोपाख्यानम्, बाल्यात्प्रभृत्येव श्वेतस्य वृषध्वजेनन्या भक्तिः, विरक्तस्य श्वेतस्य रुद्राराधनार्थं चिरकाल तपश्चर्या तपसि स्थितस्यैव क्षीणायुषः प्राप्तकालस्य श्वेतस्य नयनार्थं यमदूतानामागमनम्, यमदूतदर्शनात् त्रस्तस्य श्वेतस्य रुद्रानुस्मरणम्, रुद्रेण आसन्नमृत्योः श्वेतस्य रक्षार्थं तत्समीपे गणानां प्रेषणम्, स्वयं यमस्य तत्रागमः, यमस्य रुद्रगणैः सह विवादः , श्वेतमादाय यमस्य गणैः सह रुद्रसमीपे गमनम्, रुद्रेण यमस्य भृशं भर्त्सनम्, रुद्रत्य क्रोधदृष्ट्या यमस्य भस्मीभावः, श्वेतं प्रति रुद्रस्यानुग्रहः, श्वेतं मृत्युमुखादुन्मुच्य तस्मै गाणपत्य- प्रदानम्, ससुराणां देवानां प्रार्थनया महादेवेन यमस्य पुररुज्जीवनम, श्वेतोपाख्यानोपसंहारः ।

१६७ सप्तषष्ट्युत्तरशततमेध्याये-

शिवायतनवर्णनम् आदित्यबन्धन (आदित्यरोधन), समाख्यविन्ध्यकूटवर्त्ति तपनेश्वरप्रभृतिनेपालस्य पशुपतिनाथ सनाथमैकतुङ्गाधिपश्वरान्त नैकविधपुण्यस्थानानां संक्षिप्तवर्णनम् । अविमुक्तक्षेत्रत्स्य वाराणस्याः सविस्तरं वर्णनम् ।

१६८ अष्टषष्ट्युत्तरशततमेध्याये-

त्रैपुरोपाख्यानोपक्रमः । तारकाक्षविद्युत्प्रभाभ्यां सह मयस्य तपश्चर्या । पितामहाद्वरप्राप्तिः । पुरत्रयनिर्माणम् । त्रिपुरासुरैर्देवान् विजित्य त्रैलोक्यराज्यकरणम् । लोकानां पीडनम् । त्रिपुरविनाशार्थं ब्रह्मादिभि कृता महादेवस्तुतिः ।

१६९ ऊनसप्तत्युत्तरशततमेध्याये-

महादेवेन देवानां समाश्वासनम् । त्रिपुरसंहारार्थं महादेवस्य कृते देवै रथकल्पनम् । त्रिदेवमयशरकल्पना । ब्रह्मणः सारथ्ये शम्भोः रथारोहणम् । नारदस्य मयदिद्दक्षया त्रिपुरे गमनम् । शम्भुना सह युद्धकरणाय नारदेन मयस्य प्रोत्साहनम् । दानवानां युद्धसन्नाहः । कृतयुद्धसज्जानां दानवानां शम्भुरथस्य समीपे गमनम् ।

१७० सप्तत्युत्तरशततमेध्याये-

शम्भो रथस्य पश्चिम सागरमूर्ध्न्यवस्थितं त्रिपुरं प्रत्यभियानम् । गणदानवानां तुमुलं युद्धम् । युधि निहतानां दानवानाममृतसेकेन त्रैपुरैः पुनरुज्जीवनम् । ब्रह्मणो विज्ञप्त्या शम्भुना संकल्पमात्रेण दानवानाममृतस्य हरणम् । शम्भुना त्रिपुरदाहार्थं शरक्षेपणम् । शरक्षेपणसमकालमेव शम्भुना हा कष्टमिति उच्चैः प्रोच्य मयस्य दहनाद्रक्षार्थं नन्दिनो मुखेन (त्रिपुरं दिधक्षते) अनलाय सन्देशप्रेषणम् । वह्निवाक्यान्मयस्य त्रिपुरा- न्निष्क्रम्य पाताले गमनम् । त्रिपुरदाहः । महादेवेन देवानां विसर्जनम् । सगणस्य महादेवस्य कैलास गमनम् ।

१७१ एकसप्तत्युत्तरशततमेध्याये -

गुहकृतं क्रौञ्चादारणं शक्रकृतं पर्वतपक्षच्छेदनं चाधिकृत्य व्यासस्य सनत्कुमारं प्रति प्रश्नः । शरस्तम्बवने शक्रेण सह षण्मुखस्य विवादः । मिथः श्रेष्ठत्वपरीक्षार्थं क्रौञ्चप्रदक्षिणा । प्राथम्यविषये पुनर्विवादः । साक्ष्ये साक्ष्ये प्रकल्पितेन क्रौञ्चेन अकृतपरिक्रमस्यापि शक्रस्य मोहात् कृतप्रथमप्रदक्षिणत्वकथनम् । ततः क्रुद्धेन

कुमारेण क्रौञ्चस्योपरि शक्त्या प्रहरणम् । क्रौञ्चस्य पञ्चत्वप्राप्तिः । सर्वेषां प्रार्थनया कुमारेण क्रौञ्चस्य पुनरुज्जीवनम् । स्कन्दस्य पराक्रमप्रदर्शनम् । कुमारसंस्तवः । मातॄणामुत्पत्तिः । देवानां मातृरूपत्वम् । ईशानस्य मातृ नायकत्वम् । कोटिवर्षहेतुकेश्वरशूलकुण्डप्रतिकूलादिपुण्यक्षेत्रोत्पत्तिकथनम् । नानाविधमातृतन्त्रोत्पत्तिकथनम् । कोटिवर्षे मातॄणामवस्थानम् ।

१७२ द्विसप्तत्युत्तरशततमेध्याये-

पर्वतपक्षच्छेदोपाख्यानम्- पितुर्वधमनुस्मरतः प्रह्लादस्य वैरनिर्यातनेच्छया तपश्चरणम् । ब्रह्मणः सकाशादज- य्यत्वादिवरलाभः । प्रह्लादहिमवत्संवादः । प्रह्लादेन देवानां विनाशाय हिमवत्सकाशे साहाय्यप्रार्थनम् । प्रह्लादवाक्यात् स्वैमुत्पतद्भिः पर्वतैर्देशानामुपमर्दनम् । तद् दृष्ट्वा क्रुद्धेन शक्रेण लोकधर्मरक्षार्थं पर्वतानां पक्षच्छेदनम् ।। प्रह्लादस्य विष्णुना सह विग्रहः । प्रह्लादस्य प्रव्रज्या । आसुरेः शिष्यतां गत्वा पञ्चशिखनाम्ना ख्यातिं गतस्य प्रह्लादस्य सिद्धभावेन परमपदप्राप्तिः । पर्वतपक्षच्छेदोपाख्यानोपसंहारः ।

१७३ त्रिसप्तत्युत्तरशततमेध्याये-

द्विजमाहात्म्यवर्णनम् । पार्वत्या जिज्ञासया महादेवेन द्विजमाहात्म्यकथनम् । दानरुचिविप्रोपाख्यानम् ।

१७४ चतुसप्तत्युत्तरशततमेध्याये-

( १) - पाशुपतयोगवर्णनम् । व्यासस्य जिज्ञासया सनत्कुमारेण पाशुपतयोगवर्णनम् । योगलक्षणम् । योगाभ्यासोदाहरणम् । प्रत्याहारप्राणायामध्यानधारणानां वर्णनम् । योगिनः प्रातिभविघ्नानां तन्ना- शोपायस्य च कथनम् । सांख्यसिद्धान्तनिर्देशः ।

१७५ पंचसप्तत्युत्तरशततमेध्याये-

( २ )- सांख्यतत्व विवेचनम् संक्षेपेण सांख्य सिद्धान्त विस्तरः, सांख्यसंमतपंचविंशकसंबोधान्तमुक्तिरिरितिकथ- नम् । पाशुपतयोगमहिमकथनम् ।

१७६ षट्सप्तयुत्तरशततमेध्याये -

( ३)- जन्तोरुत्पत्तेर्वैराग्यस्य प्रबोधोपायस्य ( च) विस्तरेण वर्णनम् ।

१७७ सप्तसप्तत्युत्तरशततमेध्याये-

( ४) - योगाभ्यासविधिवर्णनस् । योगमहिमा, ध्यानिनां स्वरूपकथनम् ।

१७८ अष्टसप्तत्युत्तरशततमेध्याये-

( ५) योगिनो ध्यानविधेर्वर्णनम् । योगिनो लक्षणम्, युक्तस्य लक्षणम्, मुक्तस्य लक्षणम्, योगिनो ध्यानसंसिद्धेः साख्यानां तत्वनिश्चयस्य माहेश्वरविधिं विना न विशेषातिशयः । प्रणवमहिमा, प्रणवस्वरूपम् । प्रणवचिन्तनम् ।

१७९ ऊनाशीत्युत्तरशततमेध्याये

( ६) - योगविधिवर्णनम् । पचविंशकपुरुषस्वरूपकथनम् । षड्विंशकपरमेश्वर ( परमपुरुष) स्वरूपकथनम् षड्विंशकस्येश्वरस्य ज्ञानात् मुक्तिसिद्धिरिति कथनम् । षड्विंशकपरमेश्वरध्यानविधिकथनम् । ध्यानयोगप्र- क्रियाकथनम् ।

१८० अशीत्युत्तरशततमेध्याये -

( ७) - पाशुपतव्रतकथनम्, पाशुपतीदीक्षा, भस्ममाहात्म्यम्, भस्मस्नानमहिमा, प्रणवमहिमा, प्रणवोपासना- माहात्म्यम् ।

१८१ एकाशीत्युत्तरशततमेध्याये-

( ८) - देहावस्थावर्णनम्, जीवस्थितिवर्णनम, चेतनपुरुषस्थितिकथनम्, सात्विकादिभाववर्णनम्, जाग्रदादयव- स्थावर्णनम् । देहेग्नीषोमयोः स्थितिवर्णनम्, जीवेश्वरयोरास्पदवर्णनम्, ध्यानयोगवर्णनम्, महेश्वरज्ञानात् परमपदप्राप्तिकथनम्, नाडीषु वायूनां सचारकथनम, माहेश्वर (पाशुपत) योगोपसंहारः ।

१८२ द्व्यशीत्युत्तरशततमेध्याये-

व्यासस्य जिज्ञासया सनत्कुमारेण प्राप्तयोगस्य मुनेर्विना क्लेशं स्वेच्छया तनुं त्यक्त्वा ब्रह्मप्राप्तेरुपायकथनम् मोक्षसाधनीभूतेश्वराराधनसंप्राप्त्युपायकथनम् । त्रिविधोत्क्रान्तिकथनम् । नाडीषु प्राणसंचारस्य कथनम् । उत्क्रान्तिप्रक्रियावर्णनम् । निष्कलयोगवर्णनोपसंहारः ।

१८३ त्र्यशीत्युत्तरशततमेध्याये-

सकलस्य शिवस्य लोकस्थितिः । शिवलोकवर्णनम्, शिवपुरवर्णनम् । पुराणमहिमा, उपसंहारः ।